

PARLE

2-इन-1 मैजिक टैटूज़
जो धूप में रंग बदलें
और अंधेरे में जगमगाए




पाइए इनके साथ








1 पॉपिन्स या 2 मेलोडी चॉकलेटी या 4 स्मूदीज़

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ मे - २००३ सञ्चिका - २

















## अन्तरङ्गम्





**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
***Remittances in favour of***
***Chandamama India Ltd.***
**to**

Subscription Division
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।



*संस्थापकौ –*
चक्रपाणिः नागिरेड्डी च

# रक्ष्यतां राष्ट्रस्वास्थ्यम्

शीतलारोगः एतस्मात् प्रपञ्चात् एव अपसारितः इति यदा ज्ञातं तदा सर्वे जनाः तृप्त्या निश्श्वसितवन्तः । त्रिंशद्वर्षेभ्यः पूर्वम् अपरस्य रोगस्य अपसारणाय सङ्कल्पः कृतः आसीत् अस्माकं देशे । तस्य रोगस्य नाम 'पोलियो' इति । २००५तमवर्षस्य समाप्तितः पूर्वं जगदङ्गणात् एतस्य अपसारणं करणीयम् इति सङ्कल्प्य कार्यम् आरब्धम् अस्ति । एवं जनानां स्वास्थ्यविषये जगति विशेषास्था प्रदर्श्यमाना अस्ति ।

लोके तादृशाः रोगाः केचन सन्ति येषां च आगमनस्य निवारणाय, आगते सति चिकित्सायै च औषधानि सन्ति । येषां च विषये चिकित्सा न ज्ञायते तादृशाः अपि केचन रोगाः सन्ति एव लोके । एतादृशानां कृते औषधस्य अन्वेषणाय विश्वस्वास्थ्यसंस्था (डब्ल्यू.एच्.ओ.), विविधाः सर्वकाराः, अनेकाः स्वायत्तसंस्थाः च अहोरात्रं शोधपरीक्षणादिकार्येषु मग्नाः सन्ति ।

किन्तु दौर्भाग्यस्य विषयः नाम, येषां स्वास्थ्यरक्षणायैव एतत्सर्वं प्रचलति ते एव जनाः स्वकर्तव्यपालने आस्थावन्तः न दृश्यन्ते ! भाविजनतायाः स्वास्थ्यरक्षणविषये विशेषावधानं दातव्यम् अस्ति । यदि तेषां स्वास्थ्यं रक्षितं स्यात् तर्हि देशस्य भविष्यम् अपि उज्ज्वलं भवेत् । अतः बालानां स्वास्थ्यरक्षणाय क्रियमाणेषु कार्येषु सहायहस्तस्य प्रसारः सर्वेषां मातापितॄणाम् आद्यं कर्तव्यम् अस्ति । एतद्विषये अनास्था सर्वथा अक्षम्या अस्ति ।

---

*सम्पादकः –* **विश्वम्**

**Visit us at : http://www.chandamama.org**



भारतनायकस्पर्धायां भागम् ऊढ्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-२०

अस्माकम् इतिहासे आसन् बहवः कवयः । तान् अधिकृत्य सन्ति अत्र प्रश्नाः । उत्तरं ज्ञातुं प्रयतन्ताम् ।

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

1. अहं धार्मिकः कविः । मया भजनानि 'दोहाः' च रचिताः । अहं धार्मिक-सामाजिकमार्गदर्शकत्वेन अपि प्रसिद्धः । मम नाम किम् ?

   ..........................................................

2. मया विविधान् विषयान् आश्रित्य तमिळुभाषया १३३० भजनानि लिखितानि । अहं कः ?

   ..........................................................

3. अहं भगवन्तं पाण्डुरङ्गं स्तुवन् मराठीभाषया पञ्चसहस्राधिकानि 'अभङ्गानि' रचितवान् । मम नाम किम् इति किं भवन्तः जानन्ति ?

   ..........................................................

4. अहं कविषु अग्रगण्यत्वेन परिगण्यमानः आसं, 'कविचक्रवर्ती' इति ख्यातिं च गतवान् आसम् । मया दशसहस्राधिकैः पद्यैः युक्तं रामायणं लिखितं तमिळुभाषया । अहं कः ?

   ..........................................................

5. मया 'सुरसागर'नामकः सुमधुरः ग्रन्थः रचितः । व्रजभाषया रचिते एतस्मिन् ग्रन्थे लक्षाधिकानि पद्यानि सन्ति । मम नाम किम् ?

   ..........................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..........................................................

..........................................................

..........................................................

भागग्रहीतुः नाम ..........................................

वयः .......................... कक्ष्या ..........................

सङ्केतः ..........................................................

..........................................................

पिन् .......................... दूरवाणी ..........................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

भारतनायकस्पर्धा-२०<br>
चन्दमामा इण्डिया लिमिटेड्,<br>
८२, डिफेन्स् आफीसर्स् कालोनी<br>
एक्काट्टुतङ्गल्, चेन्नै - ६०० ०९७<br>
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, जून्, २००३

*नियमाः* –

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।

**This vacation explore the fascinating world of computers.**

**Presenting SWIFT Summer Camp - the fun way of learning computers.**

Vacations are all about fun, discovery and doing something out of the ordinary. Which is why SWIFT presents the Summer Camp - an exciting 24-hr course designed especially for you to propel you into the world of computers.

It's loaded with interesting activities that will keep you hooked and stimulate that eager little mind of yours. So waste no time and drop in with your parents at the nearest NIIT centre. And get set to take to the skies.

- Computer basics
- Flight simulation game
- Multimedia
- Explore the Universe module
- Internet
- Personality Development module

Visit the nearest NIIT centre for a 1-hour demo of SWIFT Summer Camp. And get a chance to win a computer.

Name:.......................................

Std.:.......................................

Address:.......................................

.......................................

Please cut and carry this coupon.

NIIT SWIFT

The easiest way to learn computers

Supported by:

www.netfundu.com

# सहगमनम्

लक्ष्मीः सप्ततिवर्षीया काचित् वृद्धा । प्रतिवेशिग्रामे स्थितः तस्याः दौहित्रः अस्वस्थः अस्ति इति सा कदाचित् ज्ञातवती । मध्याह्नसमयः सः । प्रखरः सूर्यातपः आसीत् । तथापि सा आतपं तृणीकृत्य पौत्रं द्रष्टुं प्रस्थितवती । मार्गे काचित् विपणिः आसीत् । तस्यां विपण्यां धेनूनां, वृषभाणां, महिषाणां च विक्रयणं क्रयणं च भवति स्म । सर्वत्र महान् जनसम्मर्दः आसीत् । मनुष्याणां प्राणिनां च मध्ये तदा तदा घट्टनं भवति स्म । अतः जनाः भीत्या एव सञ्चरन्ति स्म । अग्रे पदस्थापने अपि लक्ष्मीः कष्टम् अनुभवति स्म । 'केनापि सह घट्टिता भूत्वा पतामि चेत् क्षतग्रस्ता भवेयम्' इति तस्याः भयम् आरब्धम् ।

तावता पञ्चविंशतिवर्षीयः कश्चित् युवकः लक्ष्म्याः समीपम् आगतवान् । सा तं युवकं उक्तवती - ''मया इतः बहिः गन्तव्यम् । मया सः ग्रामः गन्तव्यः, यत्र मम पुत्री निवसति'' इति ।

तदा सः युवकः - ''किम् अहं भवत्याः सह भवामि ?'' इति पृष्टवान् ।

तदा वृद्धा - ''इतोऽप्यधिकं किम् अपेक्षितम् ? भवतः हस्तं गृहीत्वा चलामि'' इति उक्तवती ।

सः ध्वनिना पशून् निवारयन् विपण्यां निर्भयतया लक्ष्म्या सह अग्रे गच्छन् आसीत् । तं दृष्ट्वा आपणिकाः चकिताः सन्तः - ''रे ! कथं यथेच्छं चलति भवान् ? शकटस्य, पशूनां वा अधः पतनेन मरणं भवेत् इत्यपि न चिन्तयति खलु भवान् ? आत्मना सह तां वृद्धाम् अपि मारयितुम् इच्छति किम् ?'' इति तं तर्जितवन्तः ।

तथापि युवकः तेषां वचनानाम् उपेक्षां कुर्वन् अग्रे गच्छति स्म । सर्वेषु पश्यत्सु तौ विपणितः बहिः आगतवन्तौ । तावत्पर्यन्तं लक्ष्मीः युवकेन सह मौनेन आगच्छन्ती आसीत् । विपणितः बहिः आगमनस्य अनन्तरं सा युवकम् उद्दिश्य - ''किम् एतत् अन्धवत् चलनं नाम ? भवता सह चलनसमये एवं भाति स्म यत् अहं कस्यचित् जनस्य, शकटस्य, पशूनां पादस्य वा अधः पतेयम् इति । सुरक्षिततया बहिः आगच्छेयम् इत्यत्र मम विश्वासः एव नासीत् । भवता सह आगत्य मया दोषः कृतः इति भाति स्म'' इति उक्तवती ।

तदा सः युवकः - ''अम्ब ! अहम् अन्धः एव ! अत एव अहं भवत्या सह आगतवान्'' इति उक्तवान् !!



RESERVE YOUR COPY NOW!



# Junior CHANDAMAMA

Do you want your children to sharpen their faculties by working on puzzles?
**Come to Junior Chandamama for loads of puzzles and games.**



Are you looking out for interesting new stories to be read out to the kiddies?
**Pick up a copy of Junior Chandamama, and you'll find them.**






Does your child have a taste for colouring and you want to develop the habit?
**Junior Chandamama is what you must get for your child.**

Special introductory offer to child-subscribers!
**Rs. 100 for 12 issues**
**( instead of Rs. 120 )**
Offer closes on June 30, 2003.

**PAGE AFTER PAGE WILL KINDLE YOUR CHILD'S IMAGINATION**

**ISSUE AFTER ISSUE, MONTH AFTER MONTH**

## SUBSCRIPTION FORM

Please enrol me as a subscriber of Junior Chandamama. I give below the required particulars:

Name : .................................. Address : ..................................

.................................................................. PIN Code : ..................................

I am remitting the amount of Rs.100/- (Discounted rate - till June 30, 2003) for 12 issues by Money Order/Demand Draft/Cheque No .............................. on .............................. Bank ....................... branch drawn in favour of Chandamama India Ltd., encashabale at Chennai (outstation cheque to include Rs.25/- towards Bank Commission).

Place : ....................

Date : ....................

Signature

# कन्याविवाहः

कदाचित् गोपीनाथः नाम पण्डितः स्वमित्रस्य दर्शनाय कृष्णापुराग्रहारं गतवान् ।

मध्याह्नभोजनानन्तरं तौ वार्तालापं कुर्वन्तौ उपविष्टवन्तौ । तावता प्रतिवेशिनी द्विवर्षीया बाला तत्र आगता । श्वेतवर्णा पुष्टकाया सा यदा बाल्यवचनैः वदति स्म तदा तस्याः पिता अपि तत्र आगतः ।

सा बालिका गोपीनाथस्य प्रिया जाता । आगतः बालिकायाः पिता इति ज्ञातवान् गोपीनाथः तम् अवदत् - ''आर्य ! भवतः पुत्री लक्ष्मीः इव सुशोभते । मम कश्चन पुत्रः अस्ति । सः अस्ति चतुर्वर्षीयः । बालकृष्णः इव अस्ति सः । यदा भवत्पुत्री मत्पुत्रः च प्राप्तवयस्कौ भविष्यतः तदा तयोः विवाहः यदि निर्वर्त्येत तर्हि वरं स्यात् । इदानीम् एव तयोः विवाहस्य निश्चयः श्रेयसे'' इति ।

''किं मम पुत्री कस्मैचित् वृद्धाय दातव्या इति अभिप्रैति भवान् ?'' इति कोपेन पृष्टवान् बालिकायाः पिता ।

तेन किम् उच्यमानम् अस्ति इति न अवगतं गोपीनाथेन ।

तदा सः बालिकायाः पिता विवृतवान् - ''यदा मम पुत्री विंशतिवर्षीया भविष्यति तदा भवतः पुत्रः भविष्यति चत्वारिंशद्वर्षीयः । यदा मम पुत्री पञ्चविंशतिवर्षीया भविष्यति तदा भवतः पुत्रः पञ्चाशद्वर्षीयः भविष्यति । तादृशाय वृद्धाय किं कन्या मम पुत्री दातुं शक्येत ? कथं सम्भवेत् एतत् ?'' इति ।

बालिकायाः पितुः अज्ञानं दृष्ट्वा गोपीनाथः मौनम् आश्रितवान् ।





# चतुरा अर्धाङ्गिनी

प्राचीनकालीना घटना एषा । कस्मिंश्चित् राज्ये उभौ मल्लौ आस्ताम् । तयोः एकस्य नाम बलवान् इति । अपरस्य नाम भीमकायः इति । उभयोः शरीरं सुविशालम् आसीत् । सामान्यान् तौ कीटान् इव मर्दयितुं समर्थौ । महापर्वते तयोः गृहम् आसीत् । दन्तधावनाय तौ महावृक्षस्य उपयोगं कुरुतः स्म ।

कदाचित् भीमकायः निर्णीतवान् यत् बलवान् जेतव्यः इति । अतः सः स्वगदां स्वीकृत्य गृहतः प्रस्थितवान् ।

भीमकायस्य आगमनवार्ता बलवता श्रुता । महाशरीरः सः स्वस्य शरीरं कुत्रापि गोपयितुम् अपि न शक्नोति स्म । 'अहो, इदानीं किं करणीयं मया ? भीमकायः विना कारणं मया सह कलहं करिष्यति । मां पीडयिष्यति सः' इति स्वगतम् अवदत् सः ।

तदा तस्य पत्नी शीलवती उक्तवती - ''किमर्थम् एतद्विषये एतावती चिन्ता ? मया यथा उच्यते तथा आचरतु भवान् । अहं सर्वं निर्वक्ष्यामि । भवान् कटे निश्चलतया शयनं करोतु । यावत् मया न सूच्यते तावत् भवता न उत्थातव्यं, न कम्पनीयं वा'' इति ।

''महाशक्तिशाली सः कथं वा निवारयितुं शक्यः भवत्या ?'' इति पृष्टवान् बलवान् ।

''अहं किमपि करिष्यामि । भवान् चिन्तां मा करोतु । यावत् अहं जीवामि तावत् सः भीमकायः भवतः एकं केशम् अपि कम्पयितुं न अर्हति'' इति अवदत् शीलवती ।

ततः सा बलवन्तं तूलाच्छादकेन आच्छाद्य भीमकायस्य स्वागताय गृहात् बहिः आगत्य स्थितवती ।

भीमकायः मार्गस्थाः शिलाः पदाघातेन चूर्णीकुर्वन् वृक्षान् च हस्तेन पातयन् आगतवान् । सः आगमनसमये गुहास्थान् सिंहव्याघ्रादीन् उत्थाप्य गदया मारयित्वा पीडितवान् । शशमूषकादयः बिलात् अधावन् । वृक्षस्थाः उलूकगृध्रादयः पक्षी चालयन्तः उड्डयनम् अकुर्वन् ।

शीलवती शान्ततया एव भीमकायं स्वागतीकृतवती । द्वारप्रदेशे एव स्थित्वा भीमकायः क्रोधेन अगर्जत् - ''सः भीरुः बलवान् कुत्र ? मम स्वागतार्थं किमर्थं तेन

स्वयं न आगतम् ?'' इति ।

''मम पतिः नगरे नास्ति । बान्धवस्य कस्यचित् विवाहार्थं सः अन्यत्र गतवान् अस्ति । भवतः कीदृशी सेवा करणीया मया ? कृपया आदिशतु'' इति उक्तवती शीलवती ।

''मां किमर्थम् असत्यं वदति भवती ? यदि भवत्याः पतिः स्वयं गृहात् बहिः न आगमिष्यति तर्हि अहं भवत्याः सर्वान् कुक्कुटान् मर्दयिष्यामि'' इति क्रोधेन एव अवदत् भीमकायः ।

''कुक्कुटाः ? कुत्र सन्ति ते ? एते तु यूकाः । एतान् एव भवान् कुक्कुटान् मतवान् स्यात् । मम पतिः यदा केशप्रसाधनं करोति तदा एतादृशाः दशाधिकाः प्रतिदिनं केशेभ्यः पतन्ति'' इति अवदत् शीलवती ।

तावता गोशालातः महिषाणां ध्वनिः श्रुतः । तस्यां दिशि दृष्टिं प्रसार्य भीमकायः अवदत् – ''भवती पतिं यदि बहिः न प्रेषयिष्यति तर्हि अहम् एतान् महिषान् मारयित्वा खादिष्यामि'' इति ।

''महिषाः कुत्र सन्ति अत्र ? भवान् भ्रान्तः इति मन्ये । एते तु मूषकाः । एतेषां पालनं मम पतिः न इच्छति । महता अनुरोधेन मया तस्य अङ्गीकारः प्राप्तः एतदर्थम्'' इति अवदत् शीलवती ।

एतत् श्रुतवतः भीमकायस्य अन्तरङ्गे भीतिः उत्पन्ना । 'अत्र यूकाः कुक्कुटवत् सन्ति । मूषकाः च महिषाः इव स्थूलाः कृष्णवर्णीयाः सन्ति । एतादृशे स्थले मम स्थितिः अपायकरी एव' इति अचिन्तयत् सः । तथापि तां भीतिम् अप्रदर्शयन् सः – ''सः भीरुः कुत्र ? अहं स्वयं गृहं प्रविश्य तं ग्रहीष्यामि'' इति वदन् अन्तः आगत्य शयनप्रकोष्ठं प्रविष्टवान् ।

''भोः, शब्दं मा करोतु कृपया । मम पुत्रः महता प्रयासेन इदमिदानीं शायितः अस्ति मया'' इति अवदत् शीलवती ।

''एषः भवत्याः पुत्रः !'' इति वदन् यत्र बलवान् शयितः आसीत् तं कटं पश्यन् – 'बलवतः शिशुः एव एतादृशः महाकारकः चेत् बलवान् अहो, कीदृशः स्यात् ! अत्र आगच्छता मया दोषः कृतः' इति विचिन्त्य सः शीलवतीम् उद्दिश्य – ''आर्ये ! भवत्याः पतिं द्रष्टुं न शक्तं मया । प्रत्यागमनानन्तरं तं मम शुभाशयान् वदतु'' इति उक्त्वा ततः निर्गतवान् ।

तस्य निर्गमनस्य अनन्तरं शीलवती पतिं सूचितवती – ''इदानीम् उत्थातुम् अर्हति भवान्'' इति । सन्तोषेण उत्थितः बलवान् पत्नीं बहुधा प्रशंसितवान् – ''अहं भीमकायश्च बलशालिनौ तु स्वः एव । किन्तु आवयोः अपि भवती एव श्रेष्ठा'' इति ।





# मायासरोवरः

## १४

*[जयशीलः सिद्धसाधकः च नदीतीरे मकरकेतुं देवशर्माणं च दृष्टवन्तौ । तत्समये हंसैः उह्यमानः कश्चन रथः नदीतीरे अवतीर्णः । तस्मात् रथात् मायासरोवरेश्वरः, तेन सह स्थिता काञ्चनमाला च अरण्ये पतितौ आस्ताम् । तयोः रक्षणाय यावत् ते मार्गं चिन्तयन्तः आसन् तदा जलवृकराक्षसाः रथम् आक्रान्तवन्तः अकस्मात् । तदनन्तरम् ....]*

हंसरथं यदा जलवृकराक्षसाः आक्रान्तवन्तः तदा जयशीलः अवनम्य दूरे पतितं स्वखड्गं स्वीकृत्य अवदत् - ''अहो ! किम् एते एव जलवृकराक्षसाः ! एतेषां मुण्डं तु वृकसदृशम् अस्ति, अवशिष्टः भागश्च मानवानाम् इव । एते विलक्षणाः इव दृश्यन्ते'' इति ।

तत् आक्रमणं दृष्टवान् मकरकेतुः स्वस्य शूलं गृहीत्वा नदीं प्रति गच्छन् जयशीलम् अपृच्छत् - ''एते जलवृकराक्षसाः अस्माकं रथं स्वायत्तीकर्तुम् इच्छन्ति । एतेषां नाशनाय किं भवान् अस्माकं साहाय्यं कुर्यात् ?'' इति ।

जयशीलः खड्गं कोषे स्थापयन् अवदत् - ''राज्ञः कनकाक्षस्य पुत्रं पुत्रीं च दौष्ट्यव्यवहारं कुर्वन् भवतां राजा मायासरोवरेश्वरः अपहृतवान् अस्ति । तयोः रक्षणदायित्वं मम अस्ति । भवतां राज्ञा या दुष्टता आचरिता तदर्थं यथायोग्यं दण्डनीयः सः । सः भवतां राजा एतदवसरे रथे नास्ति यत् तत् तु परमं सौभाग्यं



नरवानरम् आरूढवान् । सर्वे उत्साहेन नदीं प्रविष्टवन्तः । जलवृकराक्षसानां संहारे ते सर्वे उद्युक्ताः जाताः ।

अत्रान्तरे हंसरथे स्थितः अङ्गरक्षकः जलवृकराक्षसेभ्यः स्वस्य रथस्य रक्षणाय तम् इतस्ततः नयति स्म । जलग्रहम् आरुह्य शूलं वेगेन चालयन्तं मकरकेतुं, नरवानरम् आरुह्य स्थितवन्तं सिद्धसाधकं च दृष्ट्वा जलवृकराक्षसाः नितरां भीताः । अतः ते जले निमज्जनाय उद्युक्ताः जाता । तावता मकरकेतुना प्रेरितः जलग्रहः कश्चित् जलवृकराक्षसं स्वशुण्डया गृहीत्वा उन्नीय तीरं प्रति अक्षिपत् । जयशीलः जले एव सञ्चरन् पुरतः आगतान् शत्रून् निर्दयं संहरति स्म ।

मन्यताम्'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् मकरकेतुः देवशर्माणम् अवदत् - ''वैद्यदेव ! एषः जयशीलः अस्मद्विषये एवं व्यवहरेत् इति मया कल्पना अपि न कृता आसीत् । मायासरोवरेश्वरः राजकुमारं राजकुमारीं च कथं प्रीत्या दृष्टवान् इति भवता प्रत्यक्षं दृष्टम् एव । तयोः न क्वापि हानिः कृता तेन । एषः जयशीलः अस्माकं विषये अन्यथाभावं प्राप्तवान् अस्ति'' इति ।

''जयशील ! श्रृणोतु मम वचनम् । खड्गं हस्तेन स्वीकरोतु । मायासरोवरेश्वरविषये वैरचिन्तनाय एषः न समयः'' इति अवदत् देवशर्मा ।

एतत् श्रुत्वा समाहितः जयशीलः कोषात् खड्गम् आकृष्य स्थितवान् । तं दृष्ट्वा सिद्धसाधकः अपि - 'जय महाकाल !' इति वदन्

सिद्धसाधकस्य नरवानरः कश्चित् जलराक्षसं हस्ताभ्यां गृहीत्वा नदीतीरम् आगतवान् । तम् अनुसरन्तः मकरकेतुः सर्पणखः सर्पसखः चापि तीरम् आगताः । जयशीलः तु हंसरथस्य समीपं गत्वा अङ्गरक्षकस्य उरः खड्गाग्रेण स्पृशन् कठोरस्वरेण उक्तवान् - ''अये, मायासरोवरेश्वरस्य अङ्गरक्षक ! भवता विना विरोधम् एषः रथः तीरं प्रति नेतव्यः । यदि आकाशं प्रति रथस्य नयनाय कोऽपि प्रयासः क्रियेत तर्हि भवतः मुण्डं रुण्डात् पृथक् भवेत् । स्मरतु एतत्'' इति ।

एतानि वचनानि श्रुत्वा अङ्गरक्षकः नेत्रे रक्तीकृत्य अवदत् - ''किं भवता ज्ञायते अहं कः इति ? महाशक्तिशालिनः मायासरोवरेश्वरस्य अङ्गरक्षकः अस्मि अहम् । अद्यावधि कोऽपि एवं माम् अवमानयितुं धैर्यं न प्राप्तवान् आसीत्'' इति ।

"अन्येन अकृतं कार्यं कर्तुम् एव अहम् उपस्थितोऽस्मि । हुँ, स्वस्य खड्गं स्वीकरोतु तावत्" इति वदन् जयशीलः स्वस्य खड्गं पार्श्वे संस्थाप्य वामहस्तेन अङ्गरक्षकस्य कण्ठं गृहीत्वा निपीडितवान् । तदा अङ्गरक्षकः वेदनामिश्रितेन स्वरेण अवदत् - "महोदय ! मां त्यजतु कृपया । भवान् महाशक्तिशाली साहसी च इति भासते । मम कण्ठं परित्यजतु" इति ।



जयशीलः ग्रहणं शिथिलीकृत्य अवदत् - "रथं तीरं प्रति नयतु । भवतः स्वामिनः विषये अधिकं विवरणं ज्ञातव्यम् अस्ति अस्माभिः" इति ।

अङ्गरक्षकः विना प्रतिवचनं रथं तीरं प्रति आनीतवान् । रथः यदा तीरं प्राप्नोत् तदा उत्साहं प्राप्तवान् सिद्धसाधकः नरवानरात् अधः उत्कूर्दितवान् । नरवानरस्य हस्ते स्थितं जलराक्षसं कर्णाभ्यां गृहीत्वा हंसरथसमीपम् आगत्य सः अपृच्छत् - "जयशील ! अहं मम नरवानरेण सह हिमालयं गत्वा तपस्यां कर्तुम् इच्छामि । किम् एषः रथः आवां नेतुं शक्नुयात् ?" इति ।

जयशीलः एतम् अर्थहीनं प्रश्नं श्रुत्वा मन्दहासं प्रकटितवान् । तदा सिद्धसाधकस्य वचनं श्रुतवान् अङ्गरक्षकः गर्वेण अवदत् - "महाशयाः । एषः रथः महिमान्वितः । एतं रथं वहन्तः हंसाः तु शोभावर्धकाः सन्ति । यदि अस्माकं सरोवरेश्वरः इच्छेत् तर्हि क्षणाभ्यन्तरे एषः रथः चतुर्दशलोकान् अपि परिक्रम्य आगच्छेत्" इति ।

"एवम् ! यदि रथस्य एतादृशः महिमा स्यात् तर्हि गृध्राणाम् आक्रमणतः सः किमर्थं वा अधोमुखः जातः ? रथे मायासरोवरेश्वरः अपि आसीत् एव खलु ? सर्वम् एतत् मिथ्या । एतादृशं विकत्थनं स्थगयतु । अन्यथा मम एतत् शूलं भवतः उदरं विदारयिष्यति" इति वदन् सिद्धसाधकः स्वस्य शूलम् उन्नीय प्रदर्शितवान् ।

जयशीलः तं सान्त्वयित्वा अवदत् - "सिद्धसाधक ! किम् एतेन सह कलहेन ? रथात् न केवलं सरोवरेश्वरः, अपि तु हिरण्यपुरस्य राजकुमारी अपि पतिता अस्ति । एतत् स्मर्यते खलु भवता ?" इति ।

"जयशील ! वयं राज्ञः मायासरोवरेश्वरस्य अन्वेषणाय, तस्य रक्षणाय च हंसरथम् आरुह्य गच्छन्तः स्मः । न जाने, अग्रे किं भवेत् इति" इति अवदत् मकरकेतुः ।

"वयम् अपि इतः गच्छन्तः स्मः ।



अस्माभिः अपि राजकुमारी काञ्चनमाला अन्वेष्टव्या अस्ति । यदि सा कदाचित् प्राणैः वियुक्ता जाता स्यात् तर्हि तस्य कारणं भवतां राजा एव । तथा सति भवतः राज्ञः शिरः छित्त्वा कनकाक्षमहाराजाय उपायनीकरिष्यामः वयम्'' इति अवदत् जयशीलः ।

देवशर्मा शिरः अवनमय्य किमपि चिन्तयन् आसीत् । सः जयशीलस्य वचनं श्रुत्वा अवदत् – ''जयशील ! मया इतः पूर्वम् एव उक्तम् आसीत् यत् वैरचिन्तनाय न एषः समयः इति । अस्माभिः शीघ्रम् एव इतः निर्गत्य मायासरोवरेश्वरः राजकुमारी काञ्चनमाला च अन्वेष्टव्यौ'' इति ।

''भवतः कथनं युक्तम् एव अस्ति । मायासरोवरेश्वरस्य अन्वेषणेन अस्माकं कः लाभः इति तु अन्यदेतत् । राजकुमारी काञ्चनमाला तु अवश्यम् अन्वेष्टव्या एव । एवं ननु सिद्धसाधकः ?'' इति अवदत् जयशीलः ।

सिद्धसाधकः परितः सकृत् दृष्टिं प्रसार्य अवदत् – ''एतस्मिन् घोरे अरण्ये राजकुमार्याः अन्वेषणं कथं शक्येत ?'' इति ।

सिद्धसाधकस्य वचनं श्रुत्वा हंसरथस्थः अङ्गरक्षकः रथात् अवतीर्य अग्रे आगन्तुम् उद्युक्तः । किन्तु नरवानरस्य उग्रां दृष्टिं दृष्ट्वा नितरां भीतः सः तत्रैव तिष्ठन् अवदत् – ''महाशयाः ! काञ्चनमाला अस्मद्राजः च यत्र पतितौ तत् स्थलम् अहं सम्यक् जानामि । तत्र कश्चन उन्नतः पर्वतः अस्ति । पर्वते च उन्नताः वृक्षाः सन्ति बहवः । पर्वतपार्श्वे विशालः समतलप्रदेशः अस्ति । ततः श्वेतः धूमः आकाशं प्रति निर्गच्छति'' इति ।

''एतत् अभिज्ञानम् अवलम्ब्य वयं प्रायः तत् स्थलम् अन्वेष्टुं शक्नुयाम एव । एषः अङ्गरक्षकः अस्माकं साहाय्यं करिष्यति एतद्विषये । इदानीं वयं सर्वे रथम् आरोहाम तावत्'' इति अवदत् देवशर्मा ।

''वैद्यदेव ! रथे किम् अत्रत्याः सर्वे स्थलं प्राप्नुयुः ? सिद्धसाधकस्य यत् वाहनं सः नरवानरः अपि किं रथेन नेतुं शक्यः ? मकरकेतोः वाहनं जलग्रहः किम् आकाशे उड्डयनं कुर्वन् अस्मान् अनुसरेत् ?'' इति अपृच्छत् जयशीलः ।

देवशर्मा सकृत् सर्वान् दृष्ट्वा अवदत् – ''ये ये वाहनवन्तः सन्ति ते स्ववाहनम् आरुह्य आगच्छन्ति चेदेव वरं स्यात् । एवं ननु सिद्धसाधक ? मकरकेतो, युक्तं खलु एतत् ?'' इति ।

मकरकेतुः सकृत् सिद्धसाधकस्य मुखम्

अपश्यत् । सिद्धसाधकश्च मकरकेतोः मुखं पश्यन् अवदत् - ''स्ववाहनम् आरुह्य वयं वेगेन लक्षितं स्थलं तु प्राप्तुं शक्नुयाम । तत्र न कापि चिन्ता मम । किन्तु मार्गे एषः मकरकेतुः विश्वासद्रोहम् आचरति चेत् ? तदा तु मया समर्पयिष्यते सः नरवानरस्य आहाररूपेण'' इति ।

''सिद्धसाधक ! किमर्थं कोपः ? किमर्थं वा मयि अविश्वासः ? इदानीं वयं सर्वे मित्राणि स्मः एव खलु ?'' इति हसन् अवदत् मकरकेतुः ।

''एतत् तु वचनं भवतः मुखात् बहुधा श्रुतम् अस्माभिः । किन्तु यावत् कनकाक्षराजस्य पुत्रौ सुरक्षिततया न प्राप्येते तावत् मायासरोवरेश्वरः अस्माकं शत्रुः एव'' इति अवदत् सिद्धसाधकः ।

एतदनन्तरं सिद्धसाधकात् मकरकेतोः च ऋते सर्वे हंसरथम् आरुह्य ततः निर्गताः । अङ्गरक्षकः प्रस्थानसमये तौ मार्गं स्मारयन् उक्तवान् - ''उन्नतं पर्वतम्, उन्नतान् वृक्षान् च मनसि स्थापयताम्'' इति ।

हंसरथः तयोः पश्यतोः एव नेत्रपथात् अदृश्यताम् अगच्छत् । ततः सिद्धसाधकः नरवानरस्य स्कन्धे सम्यक् उपविश्य अवदत् - ''मकरकेतो, गच्छाम तावत् । विलम्बः मास्तु'' इति ।

मकरकेतुः शिरः चालयन् जलग्रहम् आरूढवान् । तयोः प्रस्थानसमये नरवानरेण आनीतः जलवृकराक्षसः विनयेन अवदत् - ''महावीरवर्य ! भवान् मां स्वसेवकं कृत्वा नयतु आत्मना सह । अद्य आरभ्य अहं भवतः सेवकः अस्मि'' इति ।

एतत् श्रुत्वा नितरां सन्तुष्टः सिद्धसाधकः अवदत् - ''अये जलवृकराक्षस ! भवता



युक्तम् उक्तम् । किं भवान् योग्येन वेगेन नरवानरम् अनुसर्तुं शक्नुयात् ?'' इति ।

''आर्य ! यद्यपि मम पक्षौ न स्तः, तथापि अहं पक्षी इव भूमौ महता वेगेन गन्तुं समर्थः अस्मि'' इति अवदत् सः जलवृकराक्षसः ।

''एवम् ! एवं तर्हि भवान् मम सेवकः भवितुम् अर्हः'' इति वदन् तस्य पृष्ठे लघ्व्या हस्ताहत्या प्रीतिं प्रदर्श्य सिद्धसाधकः अग्रे गमनाय नरवानरम् आदिष्टवान् ।

तावता वामनसेनापतिः मेषान् आरुह्य स्वस्य अनुचरैः सह तत्र आगतवान् ।

''वामनसेनापते ! किं काऽपि विशेषवार्ता आनीता भवता ?'' इति अपृच्छत् सिद्ध-साधकः ।

वामनसेनापतिः नदीतीरे पतितान् व्रणितान् जलवृकराक्षसान् दर्शयन् अपृच्छत् - ''मान्य-वर ! अत्र यद्यत् प्रवृत्तं तत्सर्वम् अस्माभिः वृक्षाणां गुल्मानां च पृष्ठतः स्थित्वा दृष्टम् । एतेषां जलवृकराक्षसानां विषये मया कथं व्यवहरणीयम् ? किम् एतेषां चिकित्सा करणीया ? चिकित्सा न कृता चेत् एते यमलोकं प्राप्नुयुः'' इति ।

''एतेषां तादृशीं चिकित्सां करोतु, येन ते शीघ्रातिशीघ्रं परलोकं प्राप्नुयुः । यदि ते कथञ्चित् स्वस्थाः भवेयुः तर्हि भवतः सर्वान् खादेयुः । स्मर्तव्यम् एतत्'' इति अवदत् सिद्धसाधकः ।

यावत् सिद्धसाधकस्य वचनं समाप्तं तावता वामनसेनापतिः नदीतीरे स्थितम् अरण्यम् आश्चर्येण पश्यन् अवदत् - ''श्रीमन् ! तत्र पश्यतु तावत् । श्वेतः धूमः अरण्यात् निर्गत्य आकाशं स्पृशति । कथम् उत्पन्नः एषः ? किम् अरण्यं ज्वलत् अस्ति ?'' इति ।

''अये, अरण्यं न ज्वलति । एतस्य धूमस्य कारणीभूतस्य मायासरोवरेश्वरस्य शरीरं ज्वलति'' इति वामनसेनापतिम् उक्त्वा सिद्धसाधकः नरवानरम् आदिशत् - ''अये, नरवानर ! धूमस्य दिशि वेगेन गच्छतु तावत्'' इति ।

नरवानरः स्वस्य उग्रगर्जनेन अरण्यं सकृत् कम्पयित्वा ततः प्रस्थितवान् । तं जलवृक-राक्षसः अनुसृतवान् । तयोः पृष्ठतः जल-ग्रहारूढः मकरकेतुः अपि निर्गतवान् ।

- *(अनुवर्तते)*



# वेताल-कथा

## कुपण्डितेन सह स्पर्धा

'पराजयः स्यात् न हि मे कदापि' इति स्वगतं वदन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! प्रायः तादृशं सुखं न स्यात्, यच्च भवता अनुभुक्तं न स्यात्। एवं स्थिते अपि किमर्थं वा एवं मध्यरात्रे शववहनरूपं निन्द्यं कार्यं क्रियते भवता ? एतादृशम् अधःपतनं भवतः कथं जातम् इति न ज्ञायते मया। कोऽपि प्रतिद्वन्द्वी भवद्द्वारा एतादृशं कार्यं कारयन् स्यात् इति भाति मम। पूर्वं वीरः नाम पण्डितः पण्डितम्मन्येन पारिजातनामकेन स्पर्धमानः पराजयं

प्राप्तवान् । तत् कथम् इति ज्ञातुं महत् कुतूहलं स्यात् खलु भवतः ? भवतः मार्गायास-परिहाराय तस्य कथां श्रावयामि विस्तरेण । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं पारिजातः नाम कश्चन ग्रामाधिकारी आसीत् । तस्य महती इच्छा यत् जनाः मां महापण्डितं भावयेयुः इति । अतः सः प्रतिदिनं ग्रामे सभां चालयति स्म । तत्र पुराणानि वेदान् च अधिकृत्य वदति स्म सः । ग्रामीणाः जनाः यान् प्रश्नान् पृच्छन्ति स्म तेषाम् उत्तरम् अपि वदति स्म सः ।

एकदा मदनः नाम कश्चन युवकः तं ग्रामम् आगतवान् । सायं यदा पारिजातस्य सभा प्रवर्तते स्म तदा सः तत्र उपस्थितः । तस्मिन् दिने पारिजातेन गजेन्द्रमोक्षकथा श्राविता । कथायाः अन्ते श्रोतृषु एकः पृष्टवान् - ''द्रौपदी पञ्चानां पतीनां पत्नी । तथापि सा कथम् उच्यते पतिव्रता इति ?'' इति ।

तदा पारिजातः हसन् उक्तवान् - ''भवतः प्रश्ने एव उत्तरम् अपि निहितम् अस्ति'' इति ।

अपरः उत्थाय अपृच्छत् - ''रामः विना कारणं पत्नीं सीताम् अरण्ये परित्यक्तवान् । एतादृशः जनः कथं श्रेष्ठपतित्वेन अङ्गीकर्तुं शक्यः ?'' इति ।

''सीता एव अवदत् यत् मम पतिः श्रेष्ठः इति । अतः भवान् ताम् एव एतं प्रश्नं पृच्छतु'' इति अवदत् पारिजातः ।

तदनन्तरम् अन्यः ग्रामीणः उत्थाय अपृच्छत् - ''शिवेन नृत्यस्य सृष्टिः कृता । किन्तु नृत्याभ्यासः तु आधिक्येन क्रियते महिलाभिः एव । एवं किमर्थम् ? '' इति ।



"एषः प्रकृतिनियमः । सम्पाद्यते पुरुषेण । व्ययीक्रियते महिलया" इत्यवदत् पारिजातः ।

एवं बहवः प्रश्नाः पृष्टाः बहुभिः । किन्तु कोऽपि गजेन्द्रमोक्षविषये एकमपि प्रश्नं न पृष्टवान् एव । पारिजातस्य उत्तराणि अपि प्रश्नानुगुणानि न आसन् । तथापि ग्रामीणाः ततः सन्तुष्टाः इव भासन्ते स्म । एतत्सर्वं लक्षितवतः मदनस्य मनसि आश्चर्यं जातम् ।



वीरः मदनस्य दूरबन्धुः । सः बह्वीनां कथानां श्रावणे समर्थः । तस्य कथाः सहजाः, रोचिकाः, युक्तिसङ्गताः च भवन्ति स्म ।

मदनस्य मनसि विचारः आगतः - 'वीरः यदि एतं ग्रामम् आगच्छेत् तर्हि वरं स्यात् । एतद्ग्रामीणाः पण्डितगोष्ठीषु विशेषतः आसक्ताः दृश्यन्ते' इति । अतः सः पारिजातम् अवदत् - "महोदय ! भवतः सभा उत्कृष्टा आसीत् । मम बन्धुः वीरः नाम कश्चन कथाश्रावणे सुनिपुणः । यदि भवतः अनुज्ञा भविष्यति तर्हि अहं तम् एतं ग्रामम् आनेष्यामि" इति ।

"महान्तः पण्डिताः सभायाः शोभां वर्धयन्ति । भवतः बन्धुः वीरः अपि किं महापण्डितः ?" इति अपृच्छत् पारिजातः ।

"तत् तु अहं स्पष्टतया वक्तुं न शक्नोमि । सः सकृत् राजसम्मानं प्राप्तवान् आसीत् इति अहं जानामि" इति अवदत् मदनः । 'भवत्तः अपि श्रेष्ठः पण्डितः अस्ति सः' इति तु वक्तुम् इच्छति स्म सः ।

"राजसत्कारः तु आस्थानिकानां परिचय-द्वारा अपि प्राप्यते । तदर्थं महत् पाण्डित्यम् एव स्यात् इति न नियमः । पण्डितानां परीक्षा तु एतादृशीषु सभासु एव जायते । भवान् वीरम् अवश्यं मद्ग्रामम् आनयतु" इति अवदत् पारिजातः ।

मदनः स्वग्रामं प्रतिगत्य वीरं प्रवृत्तं सर्वम् अवदत् । "तस्मिन् ग्रामे जनाः सभादिषु आसक्ताः दृश्यन्ते यत् तत् तु महते सन्तोषाय । अहम् अवश्यं पारिजातेन मेलितुम् इच्छामि" इति अवदत् वीरः ।

ततः केषाञ्चित् दिनानाम् अनन्तरं मदनः वीरः च पारिजातस्य ग्रामम् आगतौ । सभा आयोजिता । तस्यां वीरः गजेन्द्रमोक्षस्य कथां रमणीयया शैल्या अश्रावयत् । वीरस्य कथायाः अनन्तरं केनापि प्रश्नः न पृष्टः ।

"एतस्मात् स्पष्टं यत् वीरेण उक्तायाः कथायाः विषये कस्यापि सन्देहः एव न आसीत् इति । सर्वेषां स्पष्टता यथा स्यात् तथा प्रयासः कृतः आसीत् वीरेण इति एतस्मात्



सिद्धम्'' इति पारिजातम् अवदत् मदनः ।

''तथा तु नास्ति । मया यदा कथा श्राव्यते तदा ग्रामीणाः विना क्लेशं ताम् अवगच्छन्ति । एवम् अवगमनानन्तरम् एव ते विविधान् प्रश्नान् पृच्छन्ति । इदानीम् अहं रुक्मिणीपरिणयकथां श्रावयामि । तदा भवान् एव पश्यतु – जनाः कथं विविधान् प्रश्नान् पृच्छन्ति इति'' इति अवदत् पारिजातः ।

ततः तेन रुक्मिणीपरिणयकथा श्राविता । कथायाः अनन्तरं ग्रामीणैः अनेके प्रश्नाः पृष्टाः । ते सर्वे आसन् न रुक्मिणीकथाम् अधिकृत्य, अपि तु ऋष्यशृङ्गम् अधिकृत्य । पारिजातस्य सर्वाणि उत्तराणि अपि यथापूर्वम् असङ्गतानि एव आसन् ।

एतत् दृष्ट्वा आश्चर्यम् अनुभवन् वीरः मदनम् अवदत् – ''एते जनाः रुक्मिणीकथां श्रुतवन्तः । प्रश्नन् तु पृच्छन्ति ऋष्यशृङ्गस्य कथायाः विषये । इतः पूर्वम् अपि एवमेव आसीत् इति भवता उक्तं स्मरामि अहम् । मम तु भाति यत् एषः पारिजातः ग्रामीणाः च सन्ति महावेदान्तिनः महामूर्खाः वा इति । एतत् तदा एव स्पष्टतया अवगम्येत यदा पण्डितसभा अन्यग्रामे आयोज्येत'' इति ।

मदनः स्वस्य भावम् अप्रकटयन् पारिजातस्य प्रशंसां बहुधा कृतवान् । सः पारिजातं सानुरोधम् उक्तवान् यत् नामवरनामके ग्रामे अपि एतादृशी पण्डितसभा आयोजनीया इति ।

ततः नामवरग्रामे अपि सभा आयोजिता । बहवः जनाः तत्र सम्मिलिताः । वीरः कुन्त्याः कथां श्रावितवान् । जनाः महता कुतूहलेन तां कथां श्रुतवन्तः । पारिजातेन भक्तस्य प्रह्लादस्य कथा श्राविता । जनाः तु वामनावतारविषये असंख्यान् प्रश्नान् पृष्टवन्तः । पारिजातः तु पूर्ववत् एव असङ्गतानि उत्तराणि दत्तवान् । एतत् दृष्टवान् मदनः महत् आश्चर्यं प्राप्तवान् ।

एतदनन्तरं निशापुरनामके ग्रामे पण्डितसभा आयोजिता । तत्रापि जनानां प्रश्नाः, पारिजातस्य उत्तराणि च असङ्गतानि एव आसन् । एतस्मात् वीरः नितरां निराशः जातः । अन्तिमप्रयत्नत्वेन जागरणपुरे सभा निश्चिता । तत्र इतःपूर्वम् एव वीरस्य भव्यः सम्मानः प्रवृत्तः आसीत् । मदनस्य आशा आसीत् यत् एतस्मिन् वा जनाः वीरं पारिजातात् श्रेष्ठं भावयेयुः इति । व्यवस्थापरिशीलनाय सः जागरणपुरं गतवान् ।

मदनः यदा ग्रामाधिकारिणा मिलितवान् तदा सः कोपं प्रकटयन् अवदत् – ''एतस्मिन् ग्रामे वीरस्य पदस्थापनं न श्रेयसे'' इति ।

''महाशय ! वीरविषये भवता मिथ्या-भावः प्राप्तः अस्ति इति भाति । पारिजातेन सह प्रवृत्तासु स्पर्धासु तेन पराजयः प्राप्तः अस्ति इत्यतः भवान् तस्मिन् अनादरं प्रकटयन् अस्ति । येषु ग्रामेषु स्पर्धा प्रवृत्ता तेषां ग्रामीणानाम् अज्ञानस्य कारणतः एवं प्रवृत्तम् । एतत्कारणतः पारिजातः महान्तं गर्वं वहति । तस्य गर्वं चूर्णीकर्तुं समर्थाः सन्ति जागरणपुरस्य जनाः । अतः एव अहम् एतस्मिन् नगरे अपि वीरपारिजातयोः स्पर्धां चालयितुम् इच्छामि'' इति अवदत् मदनः ।

तदा ग्रामाधिकारी असन्तोषेण उक्तवान् - ''पुनरपि तदेव पुनरुच्चार्यते खलु भवता ? पारिजातः पण्डितः एव न इति वयं जानीमः । पण्डितत्वं तस्मिन् नाममात्रेण अपि नास्ति । तथापि तस्मिन् दुराशा अस्ति यत् अहं महापण्डितः इति ख्यातिं प्राप्नुयाम् इति । अतः एव सः सभाः चालयन् भवति । स तु ग्रामाधिखारी अस्ति । अतः स्वस्य अधि-कारस्य बलेन सः जनानां साहाय्यं प्राप्नोति । यः तस्य अप्रियः भवति तं सः बहुधा पीडयति, तस्य महतीं हानिं कल्पयति च । अतः एव जनाः तद्विषये सदा सुमुखताभिनयं कुर्वन्ति, तदीयासु सभासु अनन्यगतिकतया भागं वहन्ति च । अन्येषु ग्रामेषु सभा प्रचलति चेदपि ते तत्र भागं वहन्ति । स्वस्य उपस्थितिं ज्ञापयितुं ते किमपि किमपि पृच्छन्ति । एतदेव पारिजातसभायाः रहस्यम्'' इति ।

एतत् विवरणं ज्ञात्वा मदनः आश्चर्येण स्तब्धः जातः । सः ग्रामाधिकारिणम् अपृच्छत् - ''एतत् तु अवगतम् । जनाः पारिजातस्य सभायां किमर्थं कथासम्बद्धान् प्रश्नान् न पृच्छन्ति ? किमर्थं वा असम्बद्धान् प्रश्नान् पृच्छन्ति ?'' इति ।



तदा ग्रामाधिकारी अवदत् - ''पारिजातस्य कथां श्रोतुं ग्रामीणाः न इच्छन्ति । तदीय-कथायाः श्रवणात् शिरोवेदना प्राप्यते तैः । अतः कथाश्रवणकाले किमपि किमपि चिन्तयन्तः उपविशन्ति ते । कथासमाप्तेः अनन्तरं यत् स्फुरितं तत् अवलम्ब्य प्रश्नः पृच्छ्यते तैः । प्रायः प्रथमः यं प्रश्नं पृच्छति तादृशाः एव प्रश्नाः पृच्छ्यन्ते अन्यैः अपि । जनानां प्रश्नस्य उत्तरं न जानाति पारिजातः अपि । ग्रामीणाः अपि पारिजातात् योग्यम् उत्तरं न अपेक्षन्ते । अतः ते तस्य सन्तोषाय साधुवादं वदन्ति'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''जागरणपुरस्य ग्रामाधिकारी पारिजातं सम्यक् जानाति । पारिजातः स्वस्य महा-पण्डितत्वख्यापनाय किं किं कपटनाटकं करोति इत्यपि तेन विवृतं मदनस्य पुरतः । एवं सर्वं जानन् अपि सः वीरस्य आगमनं निराकृत-वान् । एवं कुर्वता तेन किं वीरस्य अपमाननं न कृतम् ? सः तु वीरविषये पूर्वम् आदरवान् आसीत् । वीरं सत्कृतवान् आसीत् अपि । इदानीं किमर्थं सः वीरविषये कुपितः जातः ? तस्य नाम्नः श्रवणेन एव सः किमर्थं क्रुद्धः जातः ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''जागरणपुरस्य ग्रामाधिकारी वीरे विशेषप्रीतिमान् । वीरविषये महान् आदरः अपि अस्ति तस्य । अतः एव सः अवदत् यत् इदानीम् एतं ग्रामं प्रति वीरस्य आगमनं मास्तु इति । एवं कथनस्य किञ्चिन कारणम् अस्ति । वीरः पण्डितः इत्यत्र नास्ति सन्देहः । किन्तु तस्य व्यावहारिकं ज्ञानम् अल्पम् । कुपण्डितेन पारिजातेन सह स्पर्धां कृत्वा पराजयं प्राप्तवान् सः पुनः पुनः । जागरणपुरस्य अधिकारी इच्छति स्म यत् पुनरपि कुपण्डितेन सह स्पर्धा, वीरस्य पुनरपि पराजयश्च न भवेत् इति । अतः एव तेन तथा उक्तम् । वीरस्य अपमानः तस्य उद्देशः सर्वथा न । दुष्टात् दूरे स्थितिः वरम् इति तेन ज्ञापितम्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवस्थः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।






# सोलातृणेन निर्मीयन्ते अल्पभाराणि क्रीडनकानि

अल्पभाराः पाञ्चालिकाः भारते एषु दिनेषु दृश्यन्ते इति किं भवन्तः चिन्तयन्ति ? शिशूपयोगार्हाः एतादृश्यः पाञ्चालिकाः अत्र निर्मिताः भवन्ति स्म बहुभ्यः शतकेभ्यः पूर्वम् एव । अद्य ये क्रीडनकरूपाः भल्लूकशशादयः ते एव न केवलम्, अपि तु ऊर्णवस्त्रादि-निर्मितानि विविधानि क्रीडनकानि अपि निर्मीयन्ते स्म पूर्वम् ।

प्राचीनानि तानि क्रीडनकानि वृक्षत्वचा अपि निर्मीयन्ते स्म । थर्माकोल्वस्तुनः यावान् भारः तावान् एव भारः भवति स्म तस्य वृक्षत्वचः अपि । सामान्यैः जनैः अपि क्रेतुं योग्यं मूल्यम् अर्हन्ति स्म तानि क्रीडनकादीनि । सोलानामकः तृणविशेषः जाङ्गलभूमौ प्राधान्येन वर्धते । पश्चिमवङ्गराज्ये ते आधिक्येन दृश्यन्ते । वङ्गीयाः कलाकाराः विविधवस्तूनां निर्माणाय एतस्य तृणस्य उपयोगं कुर्वन्ति अद्यापि । एतस्य तृणस्य बाह्यावरणं यदा अपनीयते तदा 'ऐवरी'वर्णीयः मृदुः कश्चन भागः प्राप्यते । एतम् अपेक्षिताकारेण कर्तयित्वा ते क्रीडनकानि निर्मान्ति । अलङ्करणादिषु, अन्येषु कार्येषु चापि एतस्य उपयोगः क्रियते । एषु दिनेषु एतानि क्रीडनकानि चित्ताकर्षकैः वर्णैः अपि अलङ्क्रियन्ते ।

आंग्लानां शासनकाले अधिकारिणः एतेन तृणेन निर्मितं शिरस्त्रं (हेट्) धरन्ति स्म । भारतस्य यः सूर्यतापः भवति तस्य पीडातः तान् रक्षति स्म तत् । वङ्गराज्ये दुर्गापूजासमये दुर्गादेव्याः अन्यदेवानां च किरीटादिकं यत् भवति तत् केन निर्मीयते इति किं भवन्तः जानन्ति ? तत् भवति सोलातृणेन निर्मितम् ।

वङ्गदेशे विवाहावसरे वधूवरौ यत् शिरसः आभूषणं (किरीटाकारकम्) धरतः तदपि भवति सोलातृणेन निर्मितम् एव ।





# ऋणस्य अदाता

आनन्दः विशपुरं प्रति एषु दिनेषु आगतः । तस्मिन् ग्रामे सः भूमिं क्रीत्वा कृषिम् आरब्धवान् । दश धेनवः अपि तेन क्रीताः । सः चिन्तयति स्म यत् कृष्या क्षीरविक्रयणेन च जीवनं निरातङ्कं यापितं भविष्यति इति । एतस्मिन् एव काले तस्य पुत्र्याः विवाहः निश्चितः जातः । वरपक्षीयाः वदन्ति स्म यत् शीघ्रातिशीघ्रं विवाहस्य निर्वर्तनं वरम् इति ।

'वर्षानन्तरं यदि पुत्र्याः विवाहः आपतितः स्यात् तर्हि विना क्लेशं तं निर्वर्तयितुं शक्यम् अभविष्यत् । इदानीं तु मत्समीपे यत् धनम् अस्ति तत् विवाहाय अपर्याप्तम् । द्विसहस्रं रूप्यकाणि वा ऋणरूपेण प्राप्तव्यानि मया । अहं तु एतं ग्रामम् एषु दिनेषु आगतः । एतादृशाय मह्यं को वा ऋणं दद्यात् ?' इति अचिन्तयत् आनन्दः ।

आनन्दस्य पत्नी राजेश्वरी वार्तां सङ्गृहीतवती यत् एतस्मिन् ग्रामे ऋणदानसमर्थौ उभौ स्तः इति । सा एतं विषयं पतिम् उक्तवती – ''तयोः एकस्य नाम प्रदीपः इति । सः कृषिभूमिं न्यासरूपेण स्वीकृत्य ऋणं ददाति । अपरस्य नाम अस्ति सूर्यः इति । सः सुवर्णं न्यासरूपेण स्वीकृत्य ऋणं ददाति'' इति ।

परन्तु आनन्दः चिन्तयति स्म यत् द्विसहस्ररूप्यकनिमित्तं कृषिभूमेः आभरणानां वा न्यासीकरणं न वरम् इति । 'अधिकवृद्धिं दत्त्वा वा ऋणस्वीकरणं वरं, न तु कस्यापि वस्तुनः न्यासं कृत्वा' इति सः निर्णीतवान् ।

आनन्दस्य समस्यां ज्ञात्वा प्रतिवेशी यादवः उक्तवान् – ''न्यासम् अस्वीकृत्य ऋणस्य दाता एतस्मिन् ग्रामे कोऽपि नास्ति । प्रतिवेशिग्रामे परन्धामनामकः कश्चन अस्ति । सः न्यासं विना अपि ऋणं ददाति । किन्तु द्विसहस्रं रूप्यकाणि ततः प्राप्तानि चेत् वर्षानन्तरं चतुस्सहस्रं रूप्यकाणि दातव्यानि भवन्ति भवता'' इति ।

इदानीं किं करणीयम् इति चिन्तयन् आसीत् आनन्दः । तस्मिन् एव समये त्रिंशद्वर्षीयः

कश्चन युवकः तत्र आगतः । सः श्वेतं वस्त्रं धृतवान् आसीत् । सः यादवम् उक्तवान् – ''यादववर्य ! किम् एतत् ? सप्ताहानन्तरं प्रत्यर्पयिष्यते इति उक्त्वा शतं रूप्यकाणि मत्तः स्वीकृतवान् भवान् मासानन्तरम् अपि न प्रत्यर्पितवान् । मम दृष्टिपथं न आगच्छति स्म अपि । अतः ऋणं कदा प्रत्यर्पयिष्यते इति पृष्टं मया । तावता एव भवान् मम गृहं प्रति आगमनमेव परित्यक्तवान् । एवं न करणीयम् । यथापूर्वं तदा तदा गृहम् आगच्छतु'' इति ।

तस्य निर्गमनस्य अनन्तरम् आनन्दः यादवं पृष्टवान् – ''कः एषः ?'' इति ।

''एतस्य नाम वल्लभः इति । उत्तमः जनः एषः । काले साहाय्यं आचरति अपि । ऋणरूपेण दत्तस्य धनस्य वृद्धिं न इच्छति सः'' इति अवदत् यादवः ।

''एवं तर्हि मां तस्य गृहं नीत्वा परिचयं कारयतु'' इति अवदत् आनन्दः ।

तदा यादवः अवदत् – ''परिचयं कारयेयम् एव । किन्तु अत्र अस्ति कश्चन क्लेशः । तस्य स्वभावः विलक्षणः । यदि सः किमपि वदेत् तर्हि अपि अहं कोपं न करोमि । किन्तु नूतनाः तु तस्य वचनं श्रुत्वा असन्तोषं प्राप्नुयुः । सः सर्वेभ्यः ऋणं न ददाति । ऋणम् अदत्त्वैव ऋणस्य अदानविषये महान्तं खेदं प्रकटयन् भवति सः । तस्य एतं स्वभावं वयं सम्यक् जानीमः । अतः ततः ऋणं कदापि न स्वीकुर्मः'' इति ।

''ऋणम् अहं समये प्रत्यर्पयिष्यामि । अतः तस्मात् ऋणं स्वीकृतं चेत् न कोऽपि भविष्यति क्लेशः । यदि सः ऋणं न दद्यात् तर्हि तु



क्लेशः न स्यादेव'' इति अवदत् आनन्दः ।

''तस्मात् ऋणं प्राप्तुं प्रयासं करोतु । तदा मम कथनस्य आशयः ज्ञायते भवता'' इति अवदत् यादवः ।

यादवस्य वचने आनन्दस्य विश्वासः न उत्पन्नः । सः निर्णीतवान् यत् वल्लभम् ऋणं प्रक्ष्यामि एव इति । तस्मिन् एव दिने सः सायङ्काले वल्लभस्य गृहं गतवान् । तस्मिन् समये वल्लभः तत्पिता च गृहस्य पुरतः उपविश्य वार्तालापं कुर्वन्तौ आस्ताम् ।

''भवान् एव 'महिषस्य क्रयणं करोतु' इति आदिष्टवान् । मम इच्छायाः विरोधं कर्तुम् अनिच्छन् भवान् एवं कृतवान् । ततः मया महिषः क्रीतः । मम निर्णयः उचितः इति इदानीम् अपि मम मनः वदति । तथापि मम खेदः यत् भवतः खेदः मया जनितः इति ।



स्वपरिचयं स्वयं वक्तुं सङ्कोचम् अनुभवन् अहं तदा मौनेन स्थितवान् । क्षन्तव्योऽहम्'' इति ।

''अत्र क्षमायाचनस्य का प्रसक्तिः ? मम स्वभावः अपि एतादृशः एव'' इति अवदत् वल्लभः ।

ततः आनन्दः स्वनामादिविवरणम् उक्त्वा ऋणं प्रार्थितवान् । तत् श्रुत्वा वल्लभः उक्तवान् – ''मित्र ! बहु विचिन्त्य मया जीवने केचन नियमाः पाल्यमानाः सन्ति । ऋणव्यवहारतः एव प्रथमपरिचयः न भवेत् इति मम निर्णयः । क्षन्तव्यः अहम् । यदि अहं भवतः पुत्र्याः विवाहे साहाय्यम् अकरिष्यं तर्हि निश्चयेन पुण्यभाक् अपि अभविष्यम् । भवतः ऋण-प्रार्थना न्यायसङ्गता एव अस्ति । भवतः साहाय्यं कर्तुं न शक्यते यत् तदर्थं नितरां खेदम् अनुभवामि अहम्'' इति ।

अहं नितरां विषीदामि तात !'' इति ।

''वत्स ! मम अभिप्रायः भवता पृष्टः, मया च उक्तम् । तदनन्तरं भवता महिषः क्रीतः । भवता अनुचितं किमपि न कृतम् । अतः वृथा चिन्तां मा करोतु'' इति सान्त्वन-वचनानि उक्तवान् पिता ।

आनन्दः एतत् वचनं श्रुतवान् । सः अचिन्तयत् – 'वल्लभस्य मनः नितरां कोमलम् अस्ति । एतादृशस्यापि विषये यादवः तथा किमर्थम् उक्तवान् इति न ज्ञायते' इति ।

एतदभ्यन्तरे आगतम् आनन्दं दृष्टवान् वल्लभः पित्रा सह क्रियमाणं वार्तालापं स्थगित-वान् । वल्लभः स्वस्य परिचयं स्वयं वदन् उक्तवान् – ''मया भवतः नाम श्रुतम् आसीत् । अद्य प्रातः यादवसमीपे भवान् दृष्टः अपि ।

आनन्दः निराशः सन् गृहं प्रत्यागतवान् । तावता तदीयः अग्रजः विनोदः गृहे उपस्थितः आसीत् । सः आनन्दं दृष्ट्वा– ''पुत्र्याः विवाहस्य निर्वर्तनाय भवान् धनम् इच्छति इति मया श्रुतम् । इदानीं मम आर्थिकस्थितिः उत्तमा अस्ति । आयः अपि उत्तमः अस्ति । भवते धनं दातुम् एव अहम् आगतः । यदा आनुकूल्यं भविष्यति तदा प्रतिददातु मम धनम्'' इति उक्त्वा त्रिसहस्रं रूप्यकाणि दत्तवान् ।

समस्या लीलया परिहृता यत् तदर्थं महान्तं सन्तोषम् अनुभवन् आनन्दः अग्रजं कृतज्ञता-पूर्वकं नमस्कृत्य देवमन्दिरं गतवान् ।

मन्दिरे वल्लभः मिलितः । सः आनन्दम् अवदत् – ''भवान् भगवतः दर्शनार्थम्

आगतः । कष्टे स्थितः भगवन्तं स्मरेत् एव । मम ऋणदाननिराकरणात् भवतः कियत् दुःखं जातं स्यात् इति अवगन्तुं शक्नोमि अहम् । मम समीपे यद्यपि धनम् अस्ति, तथापि आत्मना अङ्गीकृतस्य नियमस्य कारणतः साहाय्यं कर्तुं न शक्तम् । मया अनुचितं कृतम् इति वदति मम मनः । मनसः शान्त्यै अहम् अत्र आगतः'' इति ।

एतत् श्रुत्वा आनन्दः अवदत् - ''भवता किमर्थं चिन्ता क्रियते ? अज्ञातपूर्वं भवन्तम् अहं प्रथमपरिचयावसरे एव ऋणं प्रार्थितवान् यत् तत् ममैव दोषः । भवता ऋणं न दत्तं यत् तत्र न किमपि अनौचित्यम्'' इति ।

''ऋणप्रार्थना एव अनुचिता जाता इति भवान् चिन्तयति । एतस्मात् स्पष्टं यत् मम व्यवहारतः भवान् महान्तं खेदम् अनुभूतवान् इति । खेदस्य निवारणाय एव भवान् मन्दिरम् आगतः । एतस्य सर्वस्य कारणम् अहम् एव'' इति अवदत् वल्लभः ।

तदा आनन्दः अग्रजेन कृतं साहाय्यं श्रावितवान् । तत् श्रुत्वा वल्लभः अवदत् - ''उत्तमानां विषये भगवान् करुणां प्रदर्शयति एव । कुतश्चित् साहाय्यं प्रापयति सः । भवान् सज्जनः इति एतद्व्यवहारतः सिध्यति । एतादृशाय सज्जनाय भवते ऋणं दातुं मया न शक्तं यत् तत् तु महतः दौर्भाग्यस्य विषयः । इदानीं मम दुःखं द्विगुणितं जातम्'' इति ।

आनन्दः महता प्रयासेन अवगमितवान् यत् मम कोऽपि खेदः नास्ति, इदानीम् अहं सन्तुष्टः एव अस्मि इति ।

एतदनन्तरम् आनन्दस्य वल्लभस्य च मेलनं



वस्त्रापणे जातम् । आनन्दः सामान्यानि वस्त्राणि एव क्रीतवान् । तदा वल्लभः अवदत् - ''हा हन्त ! यदा भवता प्रार्थितं तदैव मया ऋणं यदि दत्तं स्यात् तर्हि भवान् उत्तमानि एव वस्त्राणि अक्रेष्यत्'' इति ।

एवं यदा यदा मेलनं भवति तदा वल्लभः दुःखं प्रकटयन् वदति स्म यत् मया ऋणं न दत्तं यत् तत् तु नितराम् अनुचितं जातम् इति ।

आनन्दः स्वस्य पुत्र्याः विवाहाय वल्लभं तत्कुटुम्बसदस्यान् च निमन्त्रितवान् । तदा वल्लभः अवदत् - ''धने सत्यपि मया ऋणं न दत्तम् । भवान् तु ऋणस्य अदातारम् अपि मां प्रीत्या निमन्त्रितवान्'' इति ।

विवाहदिने उपस्थितः वल्लभः तद्दिने अपि ऋणस्य अदानस्य विषये खेदं प्रकटितवान्

द्वित्रवारम् । तस्य सान्त्वनाय आनन्देन महान् श्रमः करणीयः अभवत् । वस्तुतः तु वरपक्षीयाणां तोषणाय यावान् परिश्रमः करणीयः भवेत् ततोऽपि अधिकः परिश्रमः कृतः आनन्देन वल्लभस्य सान्त्वनाय ।

तत्समये आनन्दस्य अग्रजः विनोदः तत्र आगत्य अवदत् - ''आनन्द ! इदमिदानीं मया ज्ञातं यत् वरस्य भगिनीभ्यः शाटिका दातव्या, तासां पतिभ्यश्च अङ्गुलीयकं दातव्यम् इति । अस्माभिः एतत् न कृतम् इत्यतः असन्तुष्टाः सन्ति वरपक्षीयाः'' इति ।

''इदानीं किं वा कर्तुं शक्येत ? यावत् धनम् आसीत् तावत्तु एतावता व्ययितम् एव'' इति असहायकतां प्रदर्शयन् अवदत् आनन्दः ।

तदा वल्लभः - ''यदा भवान् माम् ऋणं प्रार्थितवान् तदा अहं यदि ऋणं दत्तवान् स्यां तर्हि एतावान् क्लेशः न अभविष्यत् एव । मदीयस्य नियमस्य कारणतः मया साहाय्यं कर्तुं न शक्तम् । भवतां सर्वासां समस्यानां मूलम् अस्मि अहम् एव'' इति वदन् पुनः पुनः खेदं प्रकटितवान् ।

एतत् दृष्ट्वा विनोदः अवदत् - ''प्रथम-परिचयः ऋणव्यवहारपुरस्सरं न भवेत् इति खलु भवतः नियमः । इदानीं तु मम सहोदरः भवता सम्यक् ज्ञायते । अतः इदानीं भवान् तस्मै द्विसहस्रं रूप्यकाणि ददातु निर्बाधम् । तेन नियमस्य उल्लङ्घनं तु कृतं न भवति । विवाहः निर्विघ्नतया प्रचलिष्यति इत्यतः महान् आनन्दश्चापि प्राप्यते भवता'' इति ।

''एवम् ! भवता युक्तम् एव उक्तम् । एषोऽहम् आगच्छामि'' इति वदन् वल्लभः ततः निर्गतवान् ।

तदा विनोदः म्लानमुखम् आनन्दम् अवदत् - ''तस्य पीडां निवारयितुं मया एवं कृतम् । वस्तुतः तु वरपक्षीयैः किमपि न उक्तम् एव । अतः विवाहनिर्वर्तने न कोऽपि क्लेशः । इतः परं सः वल्लभः भवतः समीपं न आगमिष्यति एव इत्यत्र मम दृढः विश्वासः अस्ति'' इति ।

एतदनन्तरं विवाहः निर्विघ्नं परिसमाप्तः । वल्लभः तु पुनः कदापि आनन्दस्य दृष्टिपथं न आगतः । स्वस्य व्यवहारम् अपि परिष्कृतवान् सः ।

'धनदानरूपं साहाय्यं कर्तुं मया न शक्तम्' इति पुनः कदापि न उक्तं तेन ।



# न दृष्टः पलायनाय मार्गः



तुलसीदासः श्रेष्ठः कविः । तस्य कश्चन लघुः आश्रमः आसीत् वाराणस्याम् । तस्य केचन भक्ताः अपि आसन् । तस्य अत्यधिकः समयः यापितः भवति स्म 'रामचरितमानस'ग्रन्थस्य लेखने । सः ग्रन्थः आसीत् पद्यरूपी । मन्देन स्वरेण पद्यानि गायन् सः लिखति स्म । यदि कश्चित् तानि पद्यानि श्रृणोति तर्हि ततः निर्गन्तुं मनः न प्राप्नोति स्म । बहवः भक्ताः आश्रमभूमौ उपविश्य तदीयस्य गानस्य श्रवणेन कालं यापयन्ति स्म ।

तुलसीदासस्य आश्रमस्य समीपे लुण्ठाकः तिमः वसति स्म । चौर्यापराधनिमित्तम् आरक्षकभटैः सः बहुधा गृहीतः आसीत्, कारागारे स्थापितः आसीत् च । तथापि सः तु चौर्यवृत्तिम् अनुवर्तयति स्म एव ।

तिमः तुलसीदासस्य आश्रमं परीक्षादृष्ट्या परिशीलयति स्म । आश्रमस्य द्वारं सदा उद्घाटितं भवति स्म । कोऽपि रक्षकः अपि न भवति स्म तत्र । एतत् तिमस्य कुतूहलम् अवर्धयत् । कदाचित् केचन भक्ताः गुरुवन्दनाय आश्रमम् आगतवन्तः । तिमः अपि तान् अनुसरन् आश्रमं प्रविष्टवान् । ते भक्ताः आसन् वणिजः । नगरात् आगताः आसन् ते । प्रभूतं धनम् अपि आसीत् तेषां समीपे । ते आश्रमं प्रविश्य आश्रमस्य कोणे स्ववस्तूनि स्थापयित्वा पद्यश्रवणाय ततः निर्गतवन्तः ।

तिमः तान् अनुसरन् आसीत् एव । तेषां स्यूतानाम् उपरि तस्य विशेषदृष्टिः आसीत् । एतदभ्यन्तरे तुलसीदासेन क्रियमाणं काव्यश्रवणं तेन श्रुतम् । कदा तेषु पद्येषु आकर्षणम्



उत्पन्नम् इति सः एव न जानाति स्म । दीर्घकालं यावत् सः पद्यानि शृण्वन् उपविष्टवान् । यदर्थं तेन आश्रमः प्रविष्टः सः उद्देशः अपि विस्मृतः आसीत् तेन ।

अनन्तरदिने तिमः पुनरपि आश्रमम् आगतवान् । पूर्वदिने यथा जातं तथैव प्रवृत्तम् अद्यापि । प्रतिदिनम् अपि सः आश्रमं प्रति आगमनम् आरब्धवान् । अल्पे एव काले आश्रमं प्रति आगन्तृभिः सर्वैः सः ज्ञातः जातः । सर्वे चिन्तितवन्तः यत् अयमपि संन्यासिनः भक्तः, तदीयपद्यानां श्रवणे आसक्तः च इति । किन्तु तिमः तु आश्रमात् सम्पत्तेः अपहरणाय अवकाशं प्रतीक्षते स्म ।

एकदा मध्याह्ने सारनाथतः कश्चन श्रेष्ठी आश्रमम् आगतः । सः श्रेष्ठी कानिचन अमूल्यानि वस्तूनि क्रेतुं नगरं गच्छन् आश्रमम् आगतवान् आसीत् । आश्रमात् अनतिदूरे किञ्चन शिवमन्दिरम् आसीत् । तत्र कश्चन उत्सवः आसीत् तद्दिने । तम् उत्सवं समाप्य रात्रिम् आश्रमे यापयित्वा अग्रे गन्तुम् इच्छति स्म श्रेष्ठी । एतत्सर्वम् आश्रमजनैः सह श्रेष्ठिना कृतात् वार्तालापात् अवगतवान् तिमः ।

एतं श्रेष्ठिनं जानाति स्म तिमः । पूर्वं कदाचित् सारनाथे श्रेष्ठिनः आपणात् वस्तूनां चौर्यसमये भटैः गृहीतः अपि आसीत् सः । श्रेष्ठी तं दृष्ट्वा अपि तं न अभिज्ञातवान् । 'एतत् तु सौभाग्यकरम् एव । अद्य एतस्य सम्पत्तेः अपहरणाय अवकाशः प्राप्तः अस्ति' इति अचिन्तयत् तिमः ।

यदा अन्धकारप्रसारः आरब्धः तदा श्रेष्ठी आश्रमजनाः च सर्वे शिवमन्दिरं प्रति प्रस्थितवन्तः । आश्रमे संन्यासी एकः एव दृश्यते स्म, नान्यः कोऽपि । 'अहो, मम सौभाग्यम्' इति चिन्तयन् सन्तुष्टः अभवत् तिमः ।

'मयि चौर्यस्य आरोपः यथा न स्यात् तथा करणीयम्' इति निश्चित्य सः संन्यासिनः प्रकोष्ठं गतवान् ।

संन्यासी तं दृष्ट्वा मन्दहासं प्रकटयन् अपृच्छत् – ''किं भवान् मां किमपि वक्तुम् इच्छति ?'' इति ।

''अहं गृहं प्रति गच्छन् अस्मि । आश्रमे भवतः ऋते अन्यः कोऽपि न दृश्यते इव'' इति अवदत् तिमः ।

''अन्यः कोऽपि नास्ति इति केन उक्तम् ? भवान् चिन्तां मा करोतु वत्स !'' इति अवदत् संन्यासी ।

''कोऽपि नास्ति इति केन किमर्थं वक्तव्यम् ? प्रत्यक्षदर्शनात् एव तत् ज्ञायते ।

सर्वाणि द्वाराणि उद्घाटितानि सन्ति । रक्षकः अपि कोऽपि नास्ति'' इति अवदत् तिमः ।

''द्वाराणि उद्घाटितानि सन्ति, रक्षणं च किमपि नास्ति इति केन वा उक्तम् ?'' इति पृच्छन् संन्यासी ताडपत्राणां पठने उद्युक्तः अभवत् । क्षणकालानन्तरं तिमः विना शब्दं ततः निर्गत्य श्रेष्ठिनः स्यूतं स्वीकृतवान्, द्वारस्य दिशि गतवान् च ।

किन्तु किं तत्र पश्यति सः ! तत्र धनुर्धारी. बाणहस्तः द्वारस्य पुरतः तिष्ठति !! 'एषः कश्चन नटः स्यात् । उत्सवात् प्रत्यागत्य स्वस्य बान्धवान् प्रतीक्षमाणः स्यात्' इति विचिन्त्य तिमः अपरस्य द्वारस्य समीपं गतवान् । तत्रापि सः एव पुरुषः दृष्टिगोचरः जातः । देवालयात् श्रेष्ठिनः प्रत्यागमनात् पूर्वं तिमेन ततः निर्गन्तव्यम् एव आसीत् । अतः तृतीयस्य द्वारस्य समीपं गतवान् सः । आश्चर्यं नाम सः रक्षकपुरुषः अपि तत्र उपस्थितः आसीत् ।

'तिष्ठतु नाम एषः अत्र । अहं चतुर्थात् द्वारात् निर्गमिष्यामि' इति विचिन्त्य तिमः चतुर्थद्वारसमीपं गतवान् ।

''वत्स ! किम् एतत् ? किमर्थं भवान् द्वारात् द्वारं प्रति एवं गच्छन् अस्ति ?'' इति अपृच्छत् संन्यासी ।

तिमः संन्यासिनः पादयोः पतितवान् । संन्यासी तं प्रीत्या उन्नीतवान् ।

''श्रीमन् ! मया किमेतत् दृश्यते ? कः एषः भवतः आश्रमम् एवं रक्षति ?'' इति आश्चर्येण पृष्टवान् तिमः ।

''किमर्थम् आश्चर्यम् ? सः अस्ति लोकबन्धुः । भवतः अपि बन्धुः एव सः । सः न तिष्ठति दूरे । भवतः हृदये एव वसति सः । सः एव अस्ति भगवान् रामः'' इति मन्दहासपूर्वकम् अवदत् संन्यासी ।

तिमः पश्चात्तापं प्रकटयन् पुनः अपि संन्यासिनः पादौ गृहीतवान् । ''महात्मन् ! क्षन्तव्यः अहम् । अहमस्मि पापी'' इति अश्रूणि स्रावयन् अवदत् सः ।

''भवान् पापी न सर्वथा । भवता भगवान् रामः प्रत्यक्षं दृष्टः अस्ति । अतः भगवदनुग्रहपात्रं भवान्'' इति अवदत् संन्यासी ।

तस्मिन् एव दिने तिमः तस्य संन्यासिनः शिष्यः जातः । आजीवनं तत्रैव अवसत् सः संन्यासिनः प्रियशिष्यत्वेन ।





# सन्देहः

चित्रलेखनविषये तीव्रा इच्छा आसीत् रमानाथे । किन्तु परिस्थितिः अनुकूला न आसीत् इत्यतः सः चित्रकलायाः अध्ययनं न कृतवान् । सः चत्वारिंशद्वर्षीयः जातः । तथापि तस्य इच्छा इच्छामात्ररूपेण एव आसीत् ।

कालप्रभावतः तस्य समस्याः अपगताः । इदानीं पर्याप्तः समयः अस्ति तस्य । किन्तु इदानीं सङ्कोचः - एतस्मिन् वयसि यदि अहं कलायाः अभ्यासे प्रवृत्तः भवेयं तर्हि जनाः माम् उपहसेयुः इति ।

अन्ते सः निर्णीतवान् यत् एतद्विषये प्रसिद्धस्य कलाचार्यस्य मार्गदर्शनं प्राप्य तदनुगुणं व्यवहारः करणीयः इति । अतः सः कलाचार्यस्य गृहं गतवान् । तत्र कश्चन तरुणः बालान् सारङ्गीवाद्यवादनं बोधयन् आसीत् । सः कलाचार्यम् अपि तमेव विषयं बोधयति स्म । बालैः सह आचार्यः अपि तद्वाद्यवादनम् अभ्यस्यन् आसीत् । अभ्याससमये यदि कलाचार्यः दोषं करोति तर्हि सः तरुणः परिष्करोति स्म ।

एतत् दृष्टवतः रमानाथस्य सन्देहः अपगतः । सः अवगतवान् यत् यस्यकस्यचित् अपि विषयस्य अध्ययने वयः न बाधकम्, एतदर्थं तीव्रा आसक्तिः श्रद्धा च आवश्यकी इति ।

इदानीं कलाचार्यस्य दर्शनस्य काऽपि आवश्यकता न आसीत् । अतः सः चित्रकलाभ्यासे प्रवर्तनीयम् एव इति निर्णीय मौनेन स्वगृहं प्रतिगतवान् ।

# वार्ताविशेषः

## स्नूपीस्मरणाय



पियोनट्चित्रकथासु चित्रितस्य स्नूपीशुनकस्य विषये कस्य वा प्रीतिः न स्यात् ? तादृशानां 'स्नूपी'प्रियाणां कृते अत्रास्ति काचित् सन्तोषकरी वार्ता । किञ्चन उद्यानवनं 'स्नूपी'- स्मरणाय एव निर्मितम् अस्ति । एतत् उद्यानम् अस्ति चीनदेशस्य उत्तरभागे गाङ्ग्डङ्ग्नगरे शुण्डेनामके प्रदेशे । एतस्य विस्तारः अस्ति ५५०,००० चतुरस्रमीटर्मितः । स्नूप्युद्यानं स्नूपीक्रीडाङ्गणं च तत्र निर्मितम् अस्ति १२.२ मिलियन्डालर्व्ययेन । एतादृशं जगति अन्यत् नास्ति इति श्रूयते ।

## महाकारकं पादत्राणम्

मरिकिना मनिलानगरस्य उपनगरम् । पिलिप्पैन्देशस्य 'पादत्राणराजधानी' इति ख्यातम् अस्ति एतत् । अतिमहाकारकं पादत्राणयुगलं निर्मितवता तेन नगरेण गिन्निस्पुस्तके स्वस्य नाम्नः योजनाय सन्नाहः क्रियमाणः अस्ति । विशिष्टेन चर्मणा निर्मितम् अस्ति तत् । तस्य औन्नत्यम् अस्ति ५.५ मीटर् (१७ पादपरिमितम्) । २००० तमे वर्षे फेब्रवरीमासे तुर्किश्पादत्राणयुगलं यत् निर्मितम् आसीत् ततोऽपि द्विमीटरौन्नत्यम् अधिकम् अस्ति एतस्य ।





## नृत्यति यन्त्रमानवः

एषु दिनेषु निर्मितः एसिमोनामकः यन्त्रमानवः मानवाः इव नृत्यं कर्तुं समर्थः । एतादृशः जगति एषः एव प्रथमः । एतस्य भारः ५२ किलोमितः । औन्नत्यं च १.२ मीटरात्मकः । नृत्यारम्भतः पूर्वं एषः यन्त्रमानवः द्रष्टॄणां प्रशंसाम् अपेक्षते अपि । एतस्य निर्माणं कृतम् अस्ति मलेशियादेशस्य कौलालम्पूरनगरे ।

# महाराष्ट्रीया जानपदकथा

महाराष्ट्रराज्यं गुहानां दुर्गाणां देवालयानां च आकरम् अस्ति । एतत् १९६०तमे वर्षे रूपितं जातम् । मुम्बयीसंस्थानं परितः स्थितान् मराठीभाषिप्रदेशान् मेलयित्वा एतत् राज्यं रचितम् । अधिकजनसङ्ख्यायुक्तेषु राज्येषु एतत् अन्यतमम् । अत्रत्या जनसङ्ख्या ९,६७,५२,२४७ मिता । (२००१तम-वर्षस्य जनगणनायाः अनुगुणम्) एतस्य राज्यस्य विस्तारः ३,०७,६९० चतुरस्र-किलोमीटर्मितः ।

'महाराष्ट्र'शब्दस्य 'महारथी'शब्दस्य च परस्परसम्बन्धः इति वदन्ति केचन । युद्धे अधिकशौर्यवान् उच्यते महारथी इति । 'महत् राष्ट्रम्' इति व्युत्पत्तिम् अवलम्ब्यापि महाराष्ट्रस्य अर्थं विवृण्वन्ति अन्ये । इतरे केचन 'महत् कान्तारम्' (महारण्यम्) इत्येतस्मात् शब्दात् महाराष्ट्रशब्दः उत्पन्नः इत्यपि वदन्ति । दण्डकारण्यम् अत्र अस्ति इत्येतदेव तेषां कथनस्य मूलम् ।

एतस्य राज्यस्य पश्चिमभागे अरेबियन्-समुद्रः अस्ति । वायव्यदिशि गुजरात् अस्ति । मध्यप्रदेशराज्यम् अस्ति उत्तरे । आन्ध्र-प्रदेशराज्यं नैऋत्यदिशि अस्ति । कर्णाटक-गोवाराज्ये दक्षिणदिशि स्तः । एतस्मिन् राज्ये स्थितं नागपुरं भारतस्य मध्यभागे अस्ति इति वक्तुं शक्यम् । मुम्बयीनगरम् एतस्य राजधानी । मराठी एतस्य राज्यस्य प्रमुखा व्यवहारभाषा ।

## दुर्गं प्राप्तं, किन्तु....



स च सोमवासरः । प्रातःकालः । वज्र-खचितेन कङ्कतेन केशान् प्रसाधयन्ती अट्टालिकायां स्थितवती आसीत् सा । यदा सा पूर्वस्यां दिशि दृष्टिं प्रसारितवती तदा किञ्चन दुर्गं तस्याः दृष्टिपथम् आगतम् । सूर्यप्रकाशे तत् दुर्गं विशेषतः शोभमानम् आसीत् । एतत् दृश्यं तस्याम् उद्वेगम् अजनयत् ।

सा झटिति कञ्चित् भटम् आहूय आज्ञापित-वती - ''त्वरया निर्गत्य मम पुत्रं वदतु यत् अविलम्बेन अत्र आगन्तव्यम् इति । यदि सः भोजनं कुर्वन् स्यात् तर्हि तत् तत्रैव परित्यज्य

हस्तम् अप्रक्षाल्य एव अत्र आगन्तव्यम् । एतां मम आज्ञां तं यथावत् श्रावयतु'' इति ।

तस्याः भद्रमहिलायाः नाम आसीत् जीजाबायी इति । सा मराठराजस्य छत्रपतिशिवराजस्य माता । तया दृष्टं दुर्गं सिंहगढनामकम् । सा स्थितवती आसीत् प्रतापगढनामके दुर्गे । तत्काले सिंहगढं मोगलानाम् अधीनम् आसीत् । यदा तया आज्ञा प्रेषिता तत्काले शिवराजः आसीत् रायगढे ।

यदा दूतः आगत्य मातुः आज्ञां श्रावितवान् तदा शिवराजः झटिति उत्थाय ततः प्रस्थितवान् खड्गादिकं गृहीत्वा 'कृष्ण'नामकं प्रियम् अश्वम् आरुह्य । अल्पे एव काले प्रतापगढं प्राप्य सः मात्रे वार्तां प्रेषितवान् - अहम् उपस्थितोऽस्मि इति ।

मातुः अनुज्ञां प्राप्य अन्तःपुरं गत्वा सः अपृच्छत् - ''अम्ब ! किमर्थम् आदेशः प्रेषितः - त्वरया आगन्तव्यम् इति ? किं किमपि अनुचितं प्रवृत्तम् अत्र ?'' इति ।



जीजाबायी झटिति उत्तरं न दत्तवती । अक्षक्रीडायै तं निमन्त्रयन्ती सा अवदत् - ''यदि अक्षक्रीडायाम् अहं जयं प्राप्नुयां तर्हि भवता तत् दुर्गं मह्यम् उपायनीकरणीयं, यच्च अहम् इच्छेयम्'' इति ।

तदा शिवराजः अवदत् - ''अम्ब ! मातुः विरोधः क्रीडायाम् अपि न उचितः । अतः कृपया एतस्मिन् कार्ये मां मा प्रवर्तयतु'' इति ।

किन्तु जीजाबायी एतत् अश्रुतवती इव व्यवहरन्ती अक्षसाधनानि सज्जीकृतवती । जयस्य फलरूपेण मया अपेक्षितं प्राप्तव्यम् एव इति तस्याः इच्छा प्रबला आसीत् । सा कुलदेवतां भवानीं सम्प्रार्थ्य द्यूतक्रीडाम् आरब्धवती । अल्पेन एव प्रयासेन तया जयः प्राप्तः । पराजयं प्राप्तवान् शिवराजः मातरं नमस्कुर्वन् उक्तवान् - ''अम्ब ! मदधीनेषु दुर्गेषु यत्किञ्चित् एकं प्रार्थयितुम् अर्हति भवती'' इति ।

तेषु दुर्गेषु एकम् अपि जीजाबाय्याः प्रियं न आसीत् । सा उक्तवती - ''सिंहगढम् एव मह्यम् आवश्यकम्'' इति । एतत् श्रुत्वा शिवराजः किङ्कर्तव्यताविमूढः जातः । सिंहगढं प्रबलं दुर्गम् आसीत् । बहवः वदन्ति स्म यत् तत् अजेयम् इति ।

अतः शिवराजः दैन्येन मातरम् अवदत् - ''अम्ब ! भवती जानाति एव यत् सिंहगढम् उदेभानस्य अधीनम् अस्ति इति । तस्य जयः नितरां दुश्शकः । अतः मदधीनेषु यत्किञ्चित् भवती प्रार्थयतु । तदेव दास्यामि'' इति ।

जीजाबायी तु सिंहगढम् एव इच्छति स्म । सा अवदत् - ''यदि भवान् सिंहगढं न दद्यात् तर्हि अहं भवतः समग्रं साम्राज्यं दग्धं करिष्यामि'' इति ।

अनन्यगतिकः शिवराजः सिंहगढदानम् अङ्गीकृतवान् । ततः सः मात्रा सह रायगढं प्रति गतवान् । सिंहगढस्य स्वायत्तीकरण-दायित्वं कस्मै दातुं शक्येत इत्येतस्मिन् विषये तत्र दीर्घकालं यावत् चर्चा प्रवृत्ता । तत्समये शिवराजेन स्वस्य प्राचीनं मित्रं उम्राथेस्थः तानाजि मालुसरे स्मृतः । 'एतस्य कार्यस्य साधनाय एषः एव योग्यः पुरुषः' इति अचिन्तयत् शिवराजः । सः तस्मै पत्रं प्रेषित-वान् यत् द्वादशसहस्त्रसैनिकैः सह त्रि-दिवसाभ्यन्तरे रायगढे उपस्थातव्यम् इति ।

शिवराजेन प्रेषितः दूतः आदेशपत्रं स्वीकृत्य यदा तानाजिसमीपम् आगतः तदा तानाजिः पुत्रस्य विवाहसन्नाहे मग्नः आसीत् । किन्तु शिवराजस्य पत्रं यदा प्राप्तं तदा सः विवाह-सन्नाहं स्थगयित्वा आयुधसन्नद्धैः १२,००० सैनिकैः सह रायगढं प्रति प्रस्थितवान् ।

यदा महत् सैन्यं शिवराजस्य राज्यं प्राविशत् तदा शिवराजस्य प्रासादे क्षणकालम् आतङ्कः उत्पन्नः । जीजाबायी अपि आतङ्क-ग्रस्ता जाता । रायगढस्थया तया सैन्येन उत्थापितं धूलिचक्रं दूरात् एव परिलक्षितम् आसीत् । सा आतङ्कग्रस्ता सती एव पुत्रसमीपम् आगत्य - ''एतत् सैन्यं मोगलानां न स्यात् खलु ? शत्रुभिः आक्रमणं न कृतं स्यात् खलु ?'' इति अवदत् ।

# दुर्गाणि गुहाश्च


Daulatabad Fort

महाराष्ट्रस्य सौन्दर्यम् अवलम्बते अत्रत्याणि दुर्गाणि गुहाश्च । एतत् राज्यं 'शिलामयः देशः' (दाम्ड् आश्चा देश) इत्यपि निर्दिश्यते । एतस्मिन् राज्ये सार्ध-त्रिशताधिकानि (३५०) दुर्गाणि सन्ति । सूर्यस्य वृष्टेश्च आघातं शतकानि यावत् सोढ्वा अपि अद्यापि सुस्थितौ सन्ति तानि । एतानि दुर्गाणि भवन्ति पर्वतस्य उपरि अनु समुद्रतीरं वा । तेषु बहूनि छत्रपतेः शिवराजस्य काले निर्मितानि । तत्काले एतानि नगरायन्ते स्म । रायगढ, राजगढ, सिन्धुदुर्गम्, प्रतापगढ, दौलताबाद, तोरण इत्यादीनि प्रसिद्धेषु दुर्गेषु अन्यतमानि ।

अत्रत्याः अजन्ता-एल्लोरागुहाः अतिप्रसिद्धाः, यासु च बौद्धपरम्परा बौद्धसंस्कृतिः च चित्ररूपेण निर्मिता दृश्यते । बुद्धचरितस्य अवगमने नितराम् उपकुर्वन्ति एताः गुहाः । एतासां गुहानां निर्माणं क्रि.पू.२०० तमवर्षात् पूर्वं जातं स्यात् । क्रि.श.६५० तमवर्षं यावत् एतासाम् उपयोगः आसीत् इति तर्क्यते । बौद्धसंन्यासिनाम् एकान्तध्यानाय एतासाम् उपयोगः भवति स्म प्रायः ।



तदा शिवराजः निराकरणपूर्वकं शिरः चालयन् – ''तादृशी वार्ता काऽपि न अधिगता मया अद्यावधि । मम गूढचराः एतादृशेषु विषयेषु प्रमादं कर्तुं न अर्हन्ति'' इति आत्म-विश्वासपूर्वकम् अवदत् ।

सैनिकाः समीपम् आगताः । तेषां ध्वज-चिह्नं दृष्ट्वा सर्वे ज्ञातवन्तः यत् एतत् सैन्यम् अस्मदीयानाम् एव इति । छत्रपतिः शिवराजः अचिन्तयत् यत् मम प्राचीनमित्रं तानाजिः आगच्छन् अस्ति इति ।

तेन ऊहितम् अवितथम् एव जातम् । तस्य मित्रम् अचिरात् एव तत्पार्श्वे अतिष्ठत् । शिवराजः तं सहार्दं स्वागतीकृतवान् । ततः तानाजिः तं प्रीत्या अतर्जयत् – ''मम पुत्रस्य विवाहसज्जता प्रचलन्ती आसीत् । तस्मिन् काले विघ्नः आचरितः भवता'' इति ।

''तानाजे ! भवता अहं क्षन्तव्यः । भवता अत्र अचिरात् एव उपस्थातव्यम् इति आज्ञा तु मम मातुः इच्छायाः अनुगुणं कृता'' इति अवदत् शिवराजः । यदा शिवराजः एवं वदन् आसीत् तदा जीजाबायी आसनात् उत्थाय तानाजिं प्रेषितवत्यै भवान्यै कृतज्ञताम् अर्पित-वती । ततः तानाजेः शिरः परितः दीपं त्रिवारं परिभ्रामितवती । 'एतस्य रक्षणभारः भवत्याः एव' इति देवीं प्रार्थितवती च ।

तानाजिः तस्याः समीपं गत्वा तस्याः पादौ स्पृष्ट्वा नमस्कुर्वन् अवदत् – ''अम्ब ! भवती यत् इच्छति तत् अवश्यं करिष्यामि'' इति ।

''मह्यं सिंहगढम् आवश्यकम्'' इति इच्छां प्रकटय्य सा अवदत् – ''यदि भवान् मम एताम् इच्छां पूरयिष्यति तर्हि अहं भवन्तं शिवराजस्य अनुजं भावयिष्यामि । स्वपुत्र-समानं न, पुत्रमेव भावयिष्यामि'' इति ।

तानाजिः एतत् ससन्तोषम् अङ्गीकृतवान् । एतस्मात् नितरां सन्तुष्टा जीजाबायी तानाजये तत्सैनिकेभ्यः च भूरिभोजनं व्यवस्थापितवती । तया तेभ्यः आयुधानि विविधानि आभरणानि च उपायनीकृतानि ।

ततः सैनिकाः स्वकार्यसाधनाय प्रस्थिताः । किञ्चित्कालस्य प्रयाणस्य अनन्तरं ते 'आनन्दि-बारि'नामकं स्थलं प्राप्तवन्तः । तानाजिः ग्रामप्रमुखः इव वेषं धृत्वा एकाकितया अरण्य-मार्गम् अनुसृतवान् । अचिरात् एव तेन शत्रूणां समीपं गतम् । तदा शत्रुसैनिकाः तं गृहीतवन्तः । एतत् तानाजिना ऊहितम् आसीत् एव । सः तान् अवदत् – ''अहं सताराग्रामस्य प्रमुखः अस्मि । अरण्यमार्गेण अहं यदा गच्छन् आसं तदा कश्चन व्याघ्रः माम् अभ्यद्रवत् । तस्मात्



आत्मानं रक्षन् धावन् अहम् अत्र आगतः अस्मि आश्रयम् अन्विष्यन्'' इति ।

तस्य वचने विश्वासं कृतवन्तः ते सैनिकाः । अचिरात् एव तेषां मैत्रीं सम्पादितवान् तानाजिः ताम्बूलमादकद्रव्यादिदानेन । तेभ्यः सः आभरणानि अपि दत्तवान् । दिने दिने एषा मैत्री प्रवृद्धा । केषाञ्चित् दिनानाम् अनन्तरं ते सर्वे तद्वचनपालकाः जाताः । कालस्य पक्वताम् अभिज्ञाय सः स्वस्य वास्तविकं नाम-धामादिकं तान् उक्तवान् । ते सैनिकाः दुर्गस्य विवरणादिकं तस्मै दातुं सन्नद्धाः जाताः । दुर्गस्य आरोहणं कस्मिन् भागे सुकरं स्यात् इत्यादिकं तानाजिना ज्ञातम् । उदेभानस्य तत्सहचरस्य सिधिहिलालस्य च विषये अपि पूर्णं विवरणं ज्ञातं तेन ।

एकस्यां रात्रौ तानाजिः तत्सैनिकाः च कल्याणद्वारसमीपं गताः । दुर्गस्य द्वारेषु अन्यतमं तत् । ततः तानाजिः शिवराजस्य कस्यचित् अश्वस्य खलीनादिकम् अपनीत-वान् । अश्वस्य कटिभागे एकां दृढां रज्जुं बद्ध्वा शिलामयदुर्गशिखराभिमुखं स्थापयित्वा तम् उद्दिश्य सः अवदत् - ''मित्र ! तत् शिखरं प्राप्तव्यं भवता । एतस्य आरोहणे अस्माकं साहाय्यं करणीयम्'' इति ।

सः अश्वः प्रशिक्षितः बुद्धिमान् च । सः विधेयः सेवकः इव व्यवहरन् यदा तानाजिना प्रेरितं तदा पर्वतशिखरं प्रति गमनाय उद्युक्तः जातः । अल्पे एव काले शिखरं प्राप्य सः समतले भूमौ दृढतया अतिष्ठत् ।

तानाजिः तदीयाः ५० सैनिकाः च अश्वस्य कटौ बद्धायाः रज्वाः साहाय्येन पर्वतशिखरं प्राप्तवन्तः । आरोहणावसरे हस्तयोः पादयोः च उपयोगः अत्यावश्यकः आसीत् । अतः दन्तैः खड्गं गृहीत्वा आरोहणं कृतवन्तः ते । सर्वे यदा उपरि आगताः तदा आक्रमणम् आरब्धम् । आदौ दुर्गं प्रविश्य द्वाररक्षकान् भटान् ते मारितवन्तः । ततः अपरद्वारसमीपं गत्वा तत्रत्याः भटाः अपि मारिताः तैः ।

एतदभ्यन्तरे कश्चन रक्षकभटः कथमपि पलाय्य उदेभानं शत्रूणाम् आक्रमणं श्रावित-वान् । उदेभानः तेषां निवारणाय स्वस्य प्रधानसहचरं प्रेषितवान् । किन्तु यदा सः प्रधानसहचरः तत् कर्तुम् असमर्थः जातः तदा उदेभानः स्वस्य पुत्रान् प्रेषितवान् । ते सर्वे शत्रुभिः मारिताः । तदा सः स्वयं युद्धाय उद्युक्तः जातः । तेन लक्षितं यत् शत्रवः बहवः न सन्ति इति । अतः सः स्वसैन्यम् आज्ञापित-वान् - 'शत्रवः मार्यन्ताम्' इति । शस्त्रसज्जिताः

# कला संस्कृतिः च



एतस्मिन् राज्ये कला करकौशलं च ये दृश्येते तयोः इतिहासः सुदीर्घः अस्ति । अजन्तागुहास्थानि भित्तिचित्राणि, वर्लीयानि जानपदचित्राणि च प्रसिद्धानि ।

अत्रत्यः वस्त्रनिर्माणकलायाः इतिहासः अपि सुदीर्घः । एतस्य राज्यस्य विविधेषु भागेषु शाटिकानिर्माणं प्रचलति । औरङ्गाबादीयानि मश्रु-हिम्रु-व्यूतिवस्त्राणि, पैठणीयाः शाटिकाः, शोलापुरसमीपस्थस्य नारायणपेटस्य वस्त्राणि च नितरां जनप्रियाणि ।

एतदतिरिच्य 'बिद्रि'प्रदेशीया लोहनिर्माणकला, तत्रत्या एव कांस्यकला, कौल्हापुरीया पादरक्षानिर्माणकला इत्यादयः अपि अतिप्रसिद्धाः सन्ति ।

ते सैनिकाः तानाजिम् आक्रम्य क्षणाभ्यन्तरे मारितवन्तः । तत्समये एव तानाजेः सहचरः झटिति अग्रे गत्वा उदेभानं मारितवान् ।

एतदभ्यन्तरे तानाजेः सैनिकाः दुर्गस्य अन्तः आगतवन्तः । उदेभानस्य सैनिकाः पराजिताः अभवन् । सिंहगढं मराठसैनिकानाम् अधीनं जातम् । दुर्गस्य उपरि मराठध्वजः उड्डायितः । पञ्च शतघ्न्यः प्रवर्तिताः ।

एतं सङ्केतं ज्ञात्वा शिवराजः वेगेन सिंहगढं प्रति प्रस्थितवान् । तस्य मनः प्रमुदितम् आसीत् । मात्रे दत्तं वचनं पालितम् आसीत् तेन । तानाजौ तेन स्थापितः विश्वासः अवितथः जातः आसीत् । सिंहगढं यस्य पर्वतस्य उपरि अस्ति तं पर्वतम् आरुह्य दुर्गस्य अन्तः पदं स्थापितवान् सः ।

कल्याणद्वारमार्गेण सः सिंहगढं प्रविष्टवान् । तानाजिम् अन्विष्यन् अग्रे गतवान् सः । किन्तु तानाजिः तेन दृष्टः शवरूपेण । सिंहगढं वशं गतं यत् तदर्थं मराठसैनिकाः तम् अभिनन्दितवन्तः । तदा खिन्नेन मनसा शिवराजः स्वगतम् इव अवदत् – 'दुर्गं प्राप्तं, किन्तु सिंहः गतः' इति ।





# तृप्तिः

कदाचित् अपराह्णसमये कस्याश्चित् नद्याः तीरे वृक्षस्य अधः ध्यानमग्नः आसीत् कश्चित् संन्यासी । तदा कश्चित् निर्धनः युवकः तत्र आगतवान् । सः अत्यन्तं चिन्ताकुलः आसीत् । सः चिन्तितवान् यत् संन्यासिनः ध्यानस्य भङ्गः न उचितः इति । अतः तस्य पुरतः सः कञ्चित्कालम् उपविष्टवान् । संन्यासी नेत्रे न उद्घाटयति इति यदा तेन ज्ञातं तदा सः मन्दस्वरेण आहूतवान् – 'मुनिवर्य !' इति ।

मुनिः नेत्रे उन्मील्य युवकं निर्निमेषं पश्यन् उक्तवान् – ''वदतु वत्स ! भवतः का चिन्ता ?'' इति ।

''मुनिवर्य ! मम नाम तु धनदासः इति । परन्तु मत्सकाशे किञ्चिदपि धनं नास्ति । नितरां निर्धनः अहम् । प्रतिदिनं मुष्टिपरिमितस्य अन्नस्य निमित्तम् अपि भ्रमन् भवामि । मम समीपे अधिकं धनं किमर्थं नास्ति ? मम भासते यत् जीवनतोऽपि मरणम् एव वरम् इति'' इति युवकः निराशतया उक्तवान् ।

''धनदासः इत्येतत् भवतः नाम उत्तमम् अस्ति । अहं भवतः समस्यायाः परिहारं करिष्यामि । परन्तु न अत्र । अन्यत्र कुत्रापि गच्छाम । मया सह आगच्छतु'' इति वदन् मुनिः अग्रे गतः । धनदासः तम् अनुसृतवान् ।

किञ्चिद्दूरं गमनानन्तरं तौ महाकारकस्य कस्यचित् भवनस्य समीपं गतवन्तौ, यत्र विवाहभोजनस्य सन्नाहः प्रचलति स्म । तस्य भवनस्य स्वामी महाधनवान् आसीत् । मुनिवर्यं दृष्ट्वा भक्त्या नमस्कृत्य भवनस्य अन्तः नीतवान् गृहस्वामी । धनदासः अपि मुनिवर्यम् अनुसृतवान् ।

''मुनिवर्य ! अहं भवतः सेवकः अस्मि । भवान् यत् इच्छति तत् क्षणेनैव व्यवस्थापयिष्यामि अहम्'' इति धनिकेन गृहस्वामिना सविनयं कथितम् ।

''अस्तु नाम । भवान् स्वकार्यं निर्वर्तयतु ।

गोपीनाथः

मह्यं यत् अपेक्षितं तत् सेवकानां द्वारा अहं स्वीकरिष्यामि'' इति उक्तवान् मुनिवर्यः ।

सः धनदासं भोजनालयं नीतवान् । तत्र महापात्रेषु विविधानि भक्ष्याणि आसन् । विविधैः खाद्यपदार्थैः पात्राणि पूर्णानि आसन् ।

धनदासः एकां महतीं स्थालिकां स्वीकृतवान् । तस्यां पक्वान्नं पूरितवान्, वेगेन खादनम् आरब्धवान् च । पञ्चदश निमेषान् यावत् सः निरन्तरं खादितवान् । तस्य उदरं पूर्णं जातम् । सः खादनं स्थगितवान् ।

मुनिवर्यः तम् उक्तवान् - ''भोः, किमर्थं खादनं स्थगितम् ? इतोऽपि खादतु'' इति ।

''इतोऽपि खादितुं न शक्नोमि मुनिवर्य । यत् खादितं, तदेव अधिकं जातम्'' इति धनदासः उद्विग्नः उक्तवान् ।

''किमर्थम् एवं वदति भवान् ? अत्र पक्वान्नस्य आगारम् एव अस्ति । पुनः खादनस्य अवसरः एव लभ्येत कदाचित् । अतः इतोऽपि खादतु, सर्वं खादित्वा गच्छतु'' इत्युक्तं मुनिवर्येण ।

''मुनिवर्य ! सर्वस्य खादनं कथं शक्येत ? बहुदिनपर्यन्तं खादितुं योग्यम् आहारम् एकस्मिन् एव दिने कथं खादेयम् ? एकस्मिन् दिने तु अल्पम् एव खादितुं शक्येत'' इति धनदासेन कथितम् ।

''भवता उक्तं युक्तम् एव अस्ति । परन्तु धनविषये अपि भवता किमर्थम् एवमेव न चिन्त्यते ? धनस्य दासः इति यः आत्मानं निर्दिशति, सः धनस्य स्वामी इति कुतो वा न भवेत् ? आत्मना यावत् सम्पादयितुं शक्येत तावत् एव एष्टव्यं मानवेन । यावत् शक्यते तावत् सम्पादयितुं निरन्तरं परिश्रमः च करणीयः । मनुष्यस्य अत्याशा न भवेत् । यस्य आशायाः पूरणं न भवति सः अशान्तेः पात्रं भवति । तस्य निद्रा दूरं याति । तदीयं जीवनं दुस्तरं भविष्यति । यस्य जीवने शान्तिः न भवति, सः जीवितुं न अर्हः । मनुष्यस्य जीवने तृप्तिः अवश्यं भवेत्'' इति युवकः बोधितः मुनिवर्येण ।

एतत् श्रुत्वा धनदासः - ''मुनिवर्य ! मया समस्यायाः परिहारोपायः ज्ञातः'' इति वदन् शिरः अवनमय्य मुनिवर्यं नमस्कृतवान्, उत्साहेन ततः निर्गतवान् च ।



# भारतम् अवगम्यताम्

१. स्वातन्त्र्यात् पूर्वम् आंग्लसर्वकारस्य ग्रीष्मकालीना राजधानी का आसीत् ?

अ. श्रीनगरम् आ. शिमला
इ. डेहाडून् ई. डाल्हौसी

२. अधोनिर्दिष्टासु कस्याः नद्याः उपनद्यः सन्ति- इन्द्रवती-सलेरी-प्रह्निटाः ?

अ. कृष्णा आ. गोदावरी
इ. कावेरी ई. साबरमती



४. किं भवन्तः एतं सेतुम् अभिज्ञातुम् अर्हन्ति ? कुत्र अस्ति एषः ? कस्याः नद्याः उपरि ?



३. एतस्मिन् चित्रे स्थितः दोषः कः ?

५. पञ्जाबहरियाणराज्ययोः राजधानी अभिन्ना । पञ्जाबराज्यस्य पूर्वतनराजधानी का आसीत् ?

अ. जालन्धर आ. लुधियाना
इ. अमृतसरः ई. शिम्ला

६. भारतस्य 'सिलिकान् खातः' अस्ति बेङ्गलूरु-नगरम् । एवं तर्हि 'भारतस्य स्टीलूनगरम्' इति ख्यातं नगरं किम् ?

अ. सेलम् आ. रूर्केला
इ. जमशेटपुरम् ई. शिलायी

*(उत्तराणि अग्रिमे मासे)*

## 'एप्रिल्'मासस्य प्रश्नानाम् उत्तराणि

*१. डा॰ होमि भाभा ।*
*२. १९६४तमे वर्षे । देविकाराणी रोरिच् ।*
*३. डा॰ एस्. झड्. कासिमवर्यः ।*
*४. तादृशं साहसं कृतवन्तु ते प्रथमाः आसन् । ते सर्वे (२१ जनाः) अपि अन्धाः पर्वतारोहिणः । हिमालयपर्वतारोहण-प्रशिक्षणकेन्द्रे ते प्रशिक्षणं प्राप्तवन्तः आसन् ।*
*५. यासिम् मर्चेण्ट् ।*
*६. डा॰ सलीम अली, रोमलस् विट्टकरः च ।*
*७. १९५७तमवर्षस्य एप्रिलूमासस्य प्रथमे दिनाङ्के ।*
*८. एवरेस्ट्शिखरस्य आरोहणम् । तच्च कृतं तेनसिंग् नार्गे, एड्मण्ड् हिलेरी इत्येताभ्याम् ।*
*९. परमवीरचक्रम् ।*
*१०. विजय अमृतराजः ।*



# विघ्नेश्वरः

विघ्नेश्वरप्रतिमातः निर्गच्छत् सङ्गीतं श्रद्धया शृण्वन् महर्षिः अगस्त्यः अवदत् - ''वातापिगणपते ! भवता स्वस्य अपूर्वा मूर्तिः स्वयं निर्मिता अस्ति । एवं स्वस्य मूर्तिं स्वयं को वा निर्मातुं शक्नुयात् ?'' इति ।

तदा प्रतिमास्थस्य विघ्नेश्वरस्य कण्ठध्वनिः श्रुतः - ''अगस्त्यमहर्षे ! मन्निमित्तम् एषा प्रतिमा मया न निर्मिता । भवतः तुष्ट्यर्थं मया एषा निर्मिता । अतः एषा मूर्तिः अचिरात् एव अदृश्या भविष्यति । द्वापरयुगे यदा युधिष्ठिरः अश्वमेधयागं करिष्यति तदा एतस्मिन् एव स्थाने अन्या महामूर्तिः काचित् अत्र प्रतिष्ठापिता भविष्यति'' इति ।

एवं कथां श्रावयित्वा धौम्यः अर्जुनम् अवदत् - ''हे अर्जुन ! तां महाप्रतिमाम् एव वयम् इदानीं पश्यन्तः स्मः'' इति ।

अर्जुनः बहुवारं तस्याः प्रतिमायाः परिक्रमणं कृत्वा श्रद्धया भक्त्या च प्रतिमां परिशीलितवान् । विघ्नेश्वरमूर्त्या सह तत्र जगदम्बा, लक्ष्मीः, पार्वती, सरस्वती, नव ग्रहाः इत्यादीनां देवतानां मूर्तयः अपि आसन् । विघ्नेश्वरस्य पादयोः मध्ये विघ्नः उत्कीर्णः आसीत् । मूषकराजस्य पुच्छं मूर्तिं परितः वलयाकारेण चित्रितम् आसीत् । एतस्याः प्रतिमायाः सौन्दर्यस्य अवलोकनाय सहस्रं नेत्राणि अपि अपर्याप्तानि इति भाति स्म ।

तां प्रतिमाम् आतृप्ति दृष्ट्वा अर्जुनः धौम्यम् अवदत् - ''आचार्यवर्य ! एतां मूर्तिं परितः यत् वातापिनगरं स्थितम् आसीत् तत् पूर्वम् उन्नतस्थितौ आसीत् खलु ? किमर्थं तस्य अवनतिः जाता ? एतस्य नगरस्य कथा श्रोतव्या इति महती इच्छा मम । तां श्रावयतु



कृपया'' इति ।

तदा धौम्यः कथाम् अनुवर्तितवान् -

अगस्त्यः स्वस्य पत्न्याः लोपामुद्रायाः आदेशस्य अनुगुणं धनराशिं जनेभ्यः वितीर्णवान् । ततः सः जनान् उक्तवान् यत् भवन्तः स्वस्य कर्तव्यानि स्वयम् अवगच्छन्तः नागरिकनियमान् पालयन्तः सुखेन जीवनं कुर्वन्तु इति । ततः सः रिक्तहस्ततया लोपामुद्रया सह आश्रमं प्रतिगतवान् ।

विघ्नेश्वरप्रतिमाम् आराधयन्तः वातापिनगरस्य जनाः चिरकालं यावत् सुखमयं जीवनं यापितवन्तः । बह्व्यः सन्ततिपरम्पराः अतीताः । तथापि वातापिनगरे प्रजातन्त्रं तु अक्षुण्णतया अनुवर्तते स्म । तस्य ख्यातिः सर्वत्र प्रसृता आसीत् ।

अगस्त्यात् भीतः सन् पलायितः इल्वलः विन्ध्याचलस्य अरण्यम् आश्रित्य अज्ञातजीवनं यापयति स्म । कदाचित् तेन श्रुतं यत् वातापिनगरं सर्वप्रकारैः अपि उन्नतदशां प्राप्तवत् अस्ति, अगस्त्यः इदानीं तत्र न निवसति इति ।

सामेन, दानेन, भेदेन, दण्डेन वा मम इच्छा पूरणीया एव इति सङ्कल्प्य सः जनसेवां स्वस्य जीवितोद्देशं कथयन् छद्मवेषेण वातापिनगरं प्रविष्टवान् । तस्य प्रवेशः केनापि विशेषतः न लक्षितः ।

वातापनिगरस्य स्थितिः अपि तदनुकूला एव आसीत् । महर्षेः अगस्त्यस्य अनुपस्थितेः कारणतः वातापिनगरे जनेषु स्वार्थभावना वर्धमाना आसीत् । धनिकनिर्धनभेदः महान् आसीत् तत्र । स च भेदभावः दिने दिने वर्धते स्म । बुद्धिमन्तः जनाः सामान्यान् जनान् वञ्चयन्ति स्म ।

एतस्मिन् एव काले नगरं प्राप्तवान् इल्वलः अल्पे एव काले जननायकः जातः । स्वस्य मायातन्त्रैः धनादिप्रभावेण च सः जनानाम् अवधानम् आकर्षत् । जनाः तस्मिन् विश्वासं कृतवन्तः ।

इल्वलः अवगतवान् यत् वातापिनगरे अगस्त्येन प्रतिष्ठापितायां विघ्नेश्वरमूर्त्यां जनानां श्रद्धा भक्तिः च यावत् जागर्ति तावत् जनाः अगस्त्येन व्यवहारपथम् आनीतानि नैतिकसूत्राणि न विस्मरिष्यन्ति इति । अतः सः तन्त्रविद्यासु, दुराचारेषु, मद्यपाने च जनानाम् अभिरुचिं वर्धितवान् । शिलाफलकेषु अगस्त्येन नैतिकसूत्राणि लेखितानि आसन् । तानि शिलाफलकानि अपनीय इल्वलः स्वस्य नूतनकूटसिद्धान्तानां प्रसारम् आरब्धवान् ।



अन्येषां लुण्ठनतः महान् आनन्दः प्राप्यते इति वदन् जनेषु लुण्ठनप्रवृत्तिं वर्धितवान् । सुखानुभोगार्थं नूतनमार्गाणाम् अन्वेषणम् एव मानवस्य प्रवृत्तिः इति वदन् सः जनेषु भोग-प्रवृत्तिं जागरितवान् । एतदध्यन्तरे प्रच्छन्न-वेषधारिणः बहवः राक्षसाः इल्वलस्य साहाय्यार्थं तत् नगरम् आगतवन्तः ।

'जनानां सेवकः अहम्' इति वदन् वातापि-नगरं प्रविष्टवान् इल्वलः अचिरात् एव जनानां नायकः जातः । यदा तस्य नायकत्वं सुदृढं जातं तदा सः स्वस्य अधिकारदर्पं प्रदर्शयन् जनानां मर्दनम् आरब्धवान् । एतस्मात् देशे जनानां कष्टं प्रवृद्धम् । बहवः तत् नगरं परित्यज्य अन्यत्र गताः ।

इल्वलः नगरस्य मध्ये स्थितं विघ्नेश्वर-विग्रहं नाशयितुं सर्वविधप्रयत्नान् कृतवान् । विग्रहं परितः भुषुण्डिकाः संस्थाप्य भटान् गोलकास्त्रप्रयोगाय सज्जीकारितवान् । मूर्तेः मूले विस्फोटकपदार्थाः स्थापिताः ।

यावत् सः विस्फोटकेषु अग्निं योजयितुम् उद्युक्तः तावता काचन विलक्षणा घटना घटिता । अग्निं विनैव तत्र विस्फोटः संवृत्तः । भुषुण्डिकाः विरुद्धमुखाः सत्यः गोलकास्त्रं निस्सारितवत्यः । तस्मात् बहवः दुष्टाः प्राणैः वियुक्ताः जाताः । बहवः विकलाङ्गाः अपि जाताः ।

एवम् अङ्गवैकल्यं प्राप्तवत्सु इल्वलः अपि अन्यतमः । तस्य एकः पादः, एकः हस्तश्च नष्टौ । रक्तप्रवाहे निमग्नं भूमौ लुठन्तम् इल्वलम् उद्दिश्य विघ्नेश्वरः शापं दत्तवान् - ''हे इल्वल ! अङ्गवैकल्येन वार्धक्येन च पीड्यमानः सन् भवान् चिरकालं जीवतु'' इति ।

तत् वातापिनगरम् अद्य पूर्वतनवैभवेन हीनं सत् जीर्णावस्थां प्राप्तवत् अस्ति । इदानीं तत्र नाममात्रेण केचन एव वसन्ति'' इति वदन् धौम्यः स्वस्य कथनं समापितवान् ।

अर्जुनः परिवृत्य दृष्टवान् । आश्चर्यं नाम तत्र विघ्नेश्वरप्रतिमा न आसीत् । एतस्मात् आश्चर्यं प्राप्तवन्तम् अर्जुनं धौम्यः पुनः अवदत् - ''अर्जुन ! आश्चर्यं किमर्थम् एतद्विषये ! विघ्नेश्वरप्रतिमा अदृश्यतां गमिष्यति इत्यंशः भवता पूर्वम् एव ज्ञातः आसीत् खलु ?'' इति । धौम्यः एवं वदन् यदा आसीत् तदा एकेन हस्तेन, एकेन पादेन च ऊनः कश्चन वृद्धः कण्टकमयगुल्मानां मध्यतः कष्टेन अग्रे आगत्य विघ्नेश्वरमूर्तिस्थलं पश्यन् चीत्कारं कुर्वन् नमस्कारभङ्ग्या तिष्ठन् भूमौ अपतत् ।



तत्रैव तस्य प्राणाः निर्गताः ।

एतत् दृश्यं दृष्ट्वा आश्चर्यचकितः सन् अर्जुनः अवदत् - "गुरुवर्य ! एषः एव खलु इल्वलः नाम ?" इति ।

"आम् । सः एव एषः । दुष्टानां जीवनसमाप्तिः सर्वदा एवमेव शोचनीया भवति" इति अवदत् धौम्यः ।

एतदनन्तरम् अर्जुनः दूतद्वारा युधिष्ठिराय वार्तां प्रेषितवान् यत् भवता अविलम्बेन वातापिनगरं प्रति आगन्तव्यम् इति । एतां वार्तां प्राप्य युधिष्ठिरः नकुलः सहदेवश्च वातापिनगरम् आगतवन्तः ।

तस्य दिनस्य रात्रौ युधिष्ठिरः यत्र विघ्नेश्वर-मूर्तिः अदृश्यतां गता आसीत् तस्मिन् स्थले उपविश्य विघ्नेश्वरं ध्यायन् अवदत् - "हे विघ्नेश्वर ! मम अनुजः भवतः प्रतिमां दृष्टवान् अस्ति । किं भवान् तत् दर्शनभाग्यं मह्यं न ददाति ? भवतः प्रतिमां को वा शिल्पी निर्मातुं शक्नुयात् ? यावच्छीघ्रं भवतः प्रतिमा प्रतिष्ठापिता यथा भवेत् तथा कर्तुं किं मया अवसरः न प्राप्येत ?" इति ।

तदा युधिष्ठिरस्य कर्णयोः एतानि वचनानि पतितानि - "युधिष्ठिर ! देवशिल्पी विश्वकर्मा, दानवशिल्पी मयश्च आगत्य एतां प्रतिमां निर्मास्यतः । मूर्तेः प्रतिष्ठापनस्य अनन्तरं यज्ञाश्वः इतः निर्गमिष्यति । भवतः अश्वमेध-यागः निर्विघ्नतया परिसमाप्तः भविष्यति । भवता वातापिनगरस्य पुनरुद्धारः करणीयः । भवतः वंशीयाः, तन्नाम चन्द्रवंशीयाः चिर-कालं यावत् एतस्य नगरस्य शासनं करिष्यन्ति" इति ।

युधिष्ठिरः यदा नेत्रे उन्मीलितवान् तदा क्षणं यावत् विघ्नेश्वरस्य कान्तिमती महामूर्तिः तस्य पुरतः दृष्टा । अनन्तरक्षणे एव सा अदृश्यतां गता ।

अनन्तरदिने कश्चन कृष्णवर्णः, कश्चन श्वेतवर्णः च पुरुषौ गुल्मानां मध्ये स्थितां महतीं शिलां परिशीलयन्तौ दृष्टौ । तयोः दर्शनमात्रेण एव युधिष्ठिरः अवगतवान् यत् तौ कौ इति । सः तौ सादरं प्रणम्य सत्कृतवान् ।

मृत्तिकायां मग्नायाः ताभ्यां निर्दिष्टायाः शिलायाः उन्नयनाय यदा प्रयासः कृतः तदा महान् धनराशिः प्राप्तः । इल्वलः स्वस्य ऐश्वर्यं तत्र स्थापितवान् आसीत् । तत् स्थलं परित्यक्तुम् अनिच्छन् इल्वलः तत्रैव कष्टेन दिनानि यापितवान् आसीत् । युधिष्ठिरः तत् धनं वातापिनगरस्य विकासाय उपयुक्तवान् ।

उभयोः महाशिल्पिनोः द्वारा निर्मिता

विघ्नेश्वरमूर्तिः मन्दिरं च तत्रैव स्थापनीयम् इति निश्चितं, यत्र च पूर्वं विघ्नेश्वरः अदृश्यतां गतः आसीत् । विशालः मण्डपः अपि तत्र निर्मितः । विश्वकर्ममययोः शिल्पशैल्योः अलौकिकमिश्रणेन युक्तः नूतनः शिल्पसम्प्रदायः तत्र आविर्भूतः अभवत् । एषः शिल्पसम्प्रदायः भारतीयशिल्पसम्प्रदायः इति अग्रे ख्यातः अभवत् । मूर्तिमन्दिरादिनिर्माणकार्यं समाप्य तौ शिल्पिनौ अदृश्यतां गतवन्तौ ।

युधिष्ठिरः मन्दिरे विघ्नेश्वरमूर्तेः प्रतिष्ठापनं कृतवान् । तदनन्तरं यज्ञाश्वः ततः प्रस्थितः । अर्जुनः भीमः च सेनया सह तम् अश्वम् अनुसृतवन्तौ । युधिष्ठिरः महर्षिणा अगस्त्येन आरब्धायाः प्रजातन्त्रव्यवस्थायाः प्रतिष्ठापनं तत्र पुनरपि कृत्वा नकुलसहदेवाभ्यां सह हस्तिनापुरं प्रतिगतवान् ।

अल्पे एव काले तत्रत्या शासनव्यवस्था अगस्त्यव्यवस्था इति ख्याता जाता । तच्च नगरम् अगस्त्यनगरत्वेन ख्यातं जातम् । वातापिनगरम् इत्यपि तस्य नगरस्य नामान्तरं तु आसीत् एव ।

अर्जुनः दिग्विजयं समाप्य यज्ञाश्वेन सह हस्तिनापुरं प्रत्यागतवान् । अश्वमेधयागः सम्पूर्णतां गतः । युधिष्ठिरः यज्ञशेषं विशेषतः मयाय विश्वकर्मणे च समर्पितवान् । एवं शिल्पिनां शिल्पशास्त्रस्य च विषये तेन आदरः दर्शितः ।

युधिष्ठिरस्य अनन्तरं परीक्षित् शासनम् अकरोत् । परीक्षितः अनन्तरं जनमेजयः शासनं कृतवान् । जनमेजयस्य सन्तानः वातापिनगरस्य पालनम् अकरोत् ।

वातापिनगरं पालितवत्सु चन्द्रवंशीयेषु राजसु शत्रुञ्जयः अतिमहत्त्वाकांक्षी आसीत् । सः वातापिनगरं राजधानीं परिकल्प्य वातापिसाम्राज्यं प्रतिष्ठापितवान् । सेनायाः विस्ताराय



सः जनेभ्यः करं सङ्गृहीतवान् । एतादृशैः एव अन्यैः अपि व्यवहारैः सः प्रजानाम् अप्रीतिं सम्पादितवान् । जनाः भावयन्ति स्म यत् इल्वलः शत्रुञ्जयरूपेण पुनरपि जन्म प्राप्तवान् अस्ति इति ।

शत्रुञ्जयस्य पुत्रेषु अन्तिमः चुलुकवर्मा उत्तमस्वभाववान् आसीत् । अगस्त्येन रूपितानां प्रजातन्त्रनियमानां विषये आदरवान् आसीत् सः । विघ्नेश्वरस्य आराधकः सः कलासु विविधविद्यासु च आसक्तिमान् आसीत् । अतः तस्य विषये जनानाम् आदरभावः प्रवृद्धः । जनाः भावयन्ति स्म यत् अगस्त्यस्य सर्वे अंशाः एतस्मिन् सन्ति इति ।

शत्रुञ्जयः राज्यविस्ताराय स्वपुत्रान् प्रेरितवान् । तदा चुलुकवर्मा पितरम् अवदत् - ''जनानां पीडकम् एतत् साम्राज्यविस्तारकार्यं वधशालाकार्यम् इव एव अस्ति'' इति । अतः एव सः अन्यदेशानां स्वाधीनीकरणाय प्रस्थितैः भ्रातृभिः सह गमनं निराकृतवान् ।

एतस्मात् नितरां क्रुद्धः शत्रुञ्जयः - ''यथा सिंहस्य कुले मूषकस्य जन्म तथा मम कुले भवतः जन्म जातम् अस्ति । एतदर्थं योग्यः दण्डः प्राप्तव्यः अस्ति भवता'' इति उक्त्वा एकां मूषिकाम् आनायितवान् । तस्याः नाम 'चुलुका' इति निश्चित्य चुलुका-चुलुकयोः विवाहम् उद्घोषितवान् ।

चुलुकायाः वास्तविकं नाम कल्याण-किङ्किणी इति । सा च काचित् अप्सराः । इन्द्रस्य शापस्य कारणतः सा मूषिकारूपं प्राप्य भूलोके जन्म प्राप्तवती आसीत् ।

विवाहवेदिकायां मूषिकया सह उपविष्टं चुलुकवर्माणं दृष्ट्वा जनाः उपहासं करिष्यन्ति, तस्माच्च चुलुकवर्मा लज्जितः भविष्यति इति विचिन्त्य शत्रुञ्जयः एतस्य विलक्षणविवाहस्य दर्शनाय बहून् राजानः प्रजाः च निमन्त्रितवान् आसीत् ।

किन्तु चुलुकवर्मा आत्मविश्वासेन मन्दहास-पूर्वकम् अवदत् - ''विघ्नेश्वरः एतां मूषिकां यदि वधूं कुर्यात् तर्हि सः एव मूषिकां सुन्दरीं युवतिं कुर्यात् अपि । कुर्यात् इति किं, करिष्यति एव । एतस्मिन् वचने भवतां विश्वासः न स्यात् । किन्तु मम तु पूर्णः विश्वासः अस्ति'' इति ।







# निष्कपटस्य वचनम्

शतानन्दः विरूपनामकस्य राज्यस्य महाराजः । तस्य कोषाधिकारी जयराजः । अथ कदाचित् जयराजः रोगपीडितः सन् शय्याम् आश्रितवान् । अतः तं द्रष्टुं महाराजः तदीयं गृहं गतः । तदा जयराजेन उक्तम् - ''महाराज ! मम अन्तिमकालः सन्निहितः । अतः मम स्थाने योग्यायाः व्यक्तेः नियोजनम् उचितमिति प्रतिभाति'' इति ।

''भवतः वंशः एव देशसेवायै समर्पितः इत्यंशम् अहं जानामि एव । अतः भवत्स्थाने भवतः पुत्रस्यैव नियोजनं कर्तुम् इच्छामि अहम्'' इति राजा अवदत् ।

एतत् श्रुत्वा जयराजः उक्तवान् - ''प्रभो, मम पुत्रः निष्कपटः विश्वासयोग्यश्च इत्यत्र सन्देहः एव नास्ति । तथापि तस्मिन् कोशाधिकारिणः दायित्वं वोढुं सामर्थ्यं नास्ति । अहं समर्थं, सत्यवन्तं, विश्वासपात्रं, निष्कपटं कञ्चन युवकं जानामि । सः गोपालपुरवासी । तस्य नाम 'गोपालः' इति । बहुभ्यः वर्षेभ्यः भवते तं परिचाययितुम् अहम् उत्सुकः आसम् । सः मम दूरबन्धुश्च ! शुभे दिने तस्मै वार्तां सम्प्रेषयिष्यामि'' इति ।

शतानन्दः तस्य वचनं श्रुत्वा किमपि अवदन् ततः निर्गतः । ततः अचिरात् एव जयराजस्य मृत्युः सञ्जातः । तेन महद् दुःखम् अनुभूतं राज्ञा । ततः जयराजस्य गृहसदस्यान् गोपालनामकस्य युवकस्य विषये विचारितवान् सः । किन्तु ते एतं विषयं न जानन्ति स्म एव । अतः राजा गोपालपुरं प्रति स्वसेवकान् प्रेषितवान् । सेवकाः तत्र गत्वा विचार्य प्रत्यागताः । ते राजानम् उक्तवन्तः - ''तत्र गोपालनामकाः त्रयः युवकाः सन्ति । त्रयः अपि समर्थाः योग्याश्च । ते त्रयः अपि केनचित् प्रकारेण जयराजस्य बन्धवः अपि'' इति ।

भामहः



इदानीं राजा चिन्तमग्नः सञ्जातः – 'एषु त्रिषु जयराजेन उक्तः गोपालः कः ? तस्य अन्वेषणं कथम्' इति । अतः सः मन्त्रिणा सह अस्मिन् विषये समालोचितवान् । मन्त्री बहुधा विचिन्त्य अन्ते उक्तवान् – ''वेषान्तरं धृत्वा गोपालपुरं गत्वा एतं विषयं ज्ञातुं यतिष्यावहे'' इति ।

ततः राजा मन्त्री च वेषान्तरं धृत्वा गोपालपुरं गतवन्तौ, तत्रत्यान् गोपालत्रयस्य विषये विचारितवन्तौ च । तदा सर्वैः त्रयाणाम् अपि गोपालानां विषये तमेव अभिप्रायं प्रकटितवन्तः यश्च पूर्वं राज्ञा ज्ञातः एव आसीत् । एतत् दृष्ट्वा मन्त्री राजानम् अवदत् – ''प्रभो ! एतादृशेषु विषयेषु एतद्ग्राम-वासिभ्यः अपि अन्यग्रामवासिनः एव अधिकं साहाय्यं कुर्युः । अतः आवाम् अन्यत्र गत्वा विचारयाव'' इति ।

एवं गमनसमये धर्मवीरः नाम कश्चन वृद्धः ताभ्यां दृष्टः । सः दारिद्र्येण सह मौढ्यस्य अदक्षतायाश्च प्रतिरूपम् इव आसीत् । सः स्वोदरपूरणाय अन्यान् अवलम्बते स्म । अतः सः तस्मिन् ग्रामे दातारः के के इति सम्यगेव जानाति स्म ।

मन्त्री धर्मवीरं ग्रामे स्थितानां पञ्चषाणां विषये कांश्चन प्रश्नान् पृष्टवान् । ततः तम् उक्तवान् – ''भवतः शुभदिनानि आगतानि सन्ति । अस्मिन् ग्रामे गोपालनामकाः त्रयः युवकाः सन्ति इति ज्ञातम् । भवान् एकैकम् अपि गोपालनामकं दृष्ट्वा भविष्यवाणीं वदेत् यत् राज्ञः आस्थाने भवता उद्योगः लप्स्यते इति । तत् श्रुत्वा तैः यत् प्रतिफलरूपेण दीयते तत् स्वीकृत्य सुखेन जीवनं यापयतु'' इति ।

एतत् श्रुत्वा धर्मवीरः उक्तवान् – ''अहं भवन्तौ न जानामि ! भवतः कथनस्य अनुसारं भविष्यवाणी यदि मया उच्येत तर्हि काले तैः राजास्थाने उद्योगः न प्राप्यते चेत् अहं मिथ्या-वचनः खलु भविष्यामि ? तदा ते मारयेयुः माम् । अतः एवं कर्तुम् अहं बिभेमि'' इति ।

''तैः निश्चयेन राजास्थाने उद्योगः प्राप्स्यते एव । चिन्ता मास्तु । भयस्य किमपि कारणं नास्ति । यतः आवामपि भवता सह एव आगमिष्यावः । भविष्यवाणीम् उक्त्वा प्रतिफलं तान् याचतु । किन्तु प्रतिफलं तु तेभ्यः उद्योगप्राप्त्यनन्तरमेव स्वीकरणीयम् । अग्रे भवतः जीवनं सुखमयं भविष्यति'' इति उक्तवान् सचिवः ।

धर्मवीरेण एतत् अङ्गीकृतम् । ततः त्रयः

अपि गोपालनामकस्य गृहं गतवन्तः । मन्त्री तं गोपालनामकम् अवदत् – ''आवां समीपग्रामस्थौ । एषः धर्मवीरः आवयोः विषये यां भविष्यवाणीम् उक्तवान् सा सत्यवाणी अभूत् । अपि च अनेन अस्माकं विषये इतोऽपि अनेके विषयाः उक्ताः । आवाभ्यां ज्ञातव्यं यत् अनेन उक्तं सर्वमपि सत्यम् उत असत्यम् इति । एषः धर्मवीरः भवद्ग्रामीणः । अतः अस्य परिचयः भवतः स्यात् एव । एतस्य विषये कः अभिप्रायः भवतः ?'' इति ।

तदा सः गोपालः – ''अये धर्मवीर ! कदा भवान् ज्योतिषिकः संवृत्तः ? आत्मानं ज्योतिषिकं कथयन् किं भवान् अन्यग्रामस्थान् वञ्चयन् अस्ति ?'' इति पृष्टवान् ।

''कतिपयेभ्यः दिनेभ्यः पूर्वं मयि एतत् ज्ञानं जागरितम् अस्ति । पुरतः विद्यमानानां मुखदर्शनेनैव तेषां भूतभविष्यवर्तमानकालीनां स्थितिं ज्ञातुं समर्थः जातः अस्मि । अतः अनया विद्यया जीवनयापनं चिन्तयन् अस्मि । एतत् कथं वञ्चनं भवेत् ?'' इति ।

''तर्हि मम विषये भवतः ज्योतिषं किं वदति ? भवान् मां सम्यक् जानाति एव । मम भविष्यं कथमस्ति इति वदतु, पश्यामि'' इति हास्यमिश्रितेन स्वरेण उक्तवान् गोपालः ।

''शृणोतु । दिनद्वयाभ्यन्तरे भवता राजास्थाने उद्योगः प्राप्स्यते । प्रतिफलरूपेण मह्यं किं ददाति भवान् ?'' इति धर्मवीरः पृष्टवान् ।

''राजधानीं प्रति गमनमेव मम ललाटे न लिखितम् । एवं स्थिते मया कथं राजास्थाने उद्योगः प्राप्येत ? तथापि भवतः वचनं यदि सत्यं भवेत् तर्हि अहं भवते दश सुवर्णनाणकानि दास्यामि'' इति गोपालः हसन् एव उक्तवान् ।



एवमेव अन्येन गोपालेन सह अपि सम्भाषणम् अभवत् । सः अपि राजास्थाने उद्योगः प्राप्स्यते चेत् प्रतिफलरूपेण अष्ट-त्रयात्मकं भवनं भवते दास्यामि इति वचनं दत्तवान् ।

किन्तु तृतीयः गोपालः तु - ''मया राजास्थाने उद्योगः प्राप्स्यते चेत् मम प्रथम-मासस्य वेतने अर्धभागं भवते दास्यामि'' इति वचनं दत्तवान् ।

तस्य एतत् वचनं श्रुत्वा अनुक्षणं धर्मवीरः मूर्च्छितः अभवत् । राजा, मन्त्री, गोपालः च धर्मवीरस्य मुखे जलं सिञ्चन्तः, उत्थितं तं पृष्टवन्तः - ''किमर्थम् एवं जातम् ?'' इति ।

धर्मवीरः उपविशन् राजानं मन्त्रिणं च उक्तवान् - ''अहं एतान् त्रीन् अपि सम्यक् एव जानामि । अहम् एतान् बहुवारं दानं याचितवान् अस्मि । अतः मम एतेषां परिचयः जातः अस्ति । पूर्वं यौ गोपालौ दृष्टौ तौ उभौ अपि सज्जनौ एव । किन्तु न वचनपरिपालकौ तौ । चिन्तनं विना ताभ्यां वचनं दीयते । यः मह्यम् दश सुवर्णनाणकानि ददामि इति उक्तवान् सः एकं सुवर्णनाणकं दद्यात् कदाचित् । यः अष्टत्रयात्मकस्य भवनस्य दानं प्रतिज्ञातवान् सः एकाम् इष्टिकां दत्त्वा - 'एतदेव भवनमिति भावयतु' इति वदेत् । किन्तु एषः तृतीयः गोपालः न तथा । एषः वचनपरि-पालकः । वचनं दत्तं चेत् तस्य पालनं प्राणेभ्योऽपि महत् इति भावयति । राजास्थाने उद्योगप्राप्त्यनन्तरं प्राप्तस्य प्रथममासस्य वेतनस्य अर्धभागः तेन मह्यं दत्तश्चेत् तद् धनं मम जीवननिर्वहणाय पर्याप्तं भवेत् । एतत् सर्वं विचिन्त्य मम मनः सन्तोषातिरेकेण विसंज्ञम् अभवत्'' इति ।

तदा मन्त्री गोपालं धर्मवीरं च निजविषयं निवेद्य राजानम् उक्तवान् - ''प्रभो ! अहं यदि एवं न कुर्यां तर्हि धर्मवीरः सत्यांशं मां न अवदिष्यत् । अतः मया एतत् नाटकम् आरचितम् । इदानीं तु आवयोः अन्वेषणं फलप्रदं जातम् । एषः तृतीयः गोपालः एव अस्माकं कृते योग्यः'' इति ।

राजा तृतीयं गोपालम् एव कोषाधिकारिपदे नियुक्तवान् । धर्मवीरः अपि यथाशक्ति साहाय्यं कृतवान् । अन्ययोः गोपालयोः कृते अपि राजास्थाने उद्योगः दत्तः ।





# पिशाच्याः चातुर्यम्

विष्णुलक्ष्म्योः यदा विवाहः जातः तदा सर्वेऽपि तौ दृष्ट्वा बहुवारं कथितवन्तः यत् एतौ वधूवरौ रूपेण सदृशौ स्तः, अतः एतयोः जीवनं निश्चयेन सुखमयं भवेत् इति ।

किन्तु चिन्तितस्य विरुद्धमेव सञ्जातम् । यतः तौ सर्वदा कलहं कुरुतः स्म । विष्णुना उक्तं किमपि लक्ष्म्यै न रोचते स्म । लक्ष्म्याः वचनं विष्णुरपि निराकरोति स्म सदापि ।

कदाचित् लक्ष्म्याः पितृव्यपुत्रस्य विवाहः निश्चितः । तदा लक्ष्मीः पतिम् उक्तवती - ''अहं भवता सह गन्तुं न इच्छामि । किन्तु निरुपाया अस्मि । भवता सह न गच्छामि चेत् जनाः माम् उपहसेयुः'' इति ।

''कस्यापि अपरिचितस्य विवाहार्थं न आगच्छामि अहम् । अहं न याचकः'' इति कुपितः सन् उक्तवान् विष्णुः ।

''समीचीनम् अभवत् । भवता सह गन्तुं ममापि नास्ति मनः'' इति उक्त्वा लक्ष्मीः सन्तोषेण गृहात् निर्गन्तुम् उद्युक्ता ।

''तिष्ठतु ! अहं भवत्याः पतिः । भवत्या सह यदि न गच्छेयं तर्हि जनाः माम् उपहसेयुः । अतः भवत्या सह मया गन्तव्यम् एव'' इति वदन् विष्णुः अपि प्रस्थितः ।

उभौ अपि ग्रामस्य सीमापर्यन्तमपि न गतवन्तौ । तावति काले सूर्यास्तः अभवत् । तौ लघ्वरण्ये गच्छन्तौ आस्ताम् । तदा पार्श्वग्रामस्थः कश्चन पुरतः आगच्छन् ताभ्यां दृष्टः । सः एतौ दृष्ट्वा – ''अये विष्णो ! अहं भवतः गृहं प्रत्येव प्रस्थितः । भवतः भगिन्याः गृहे भवतः पिता अस्ति खलु ? तस्य अकस्मात् अनारोग्यम् अभवत् । वैद्यैः उक्तं यत् सः आसन्नमरणः अस्ति इति । पिता भवन्तं बहुधा स्मरति । शीघ्रं गच्छतु'' इति उक्तवान् ।

''श्रुतं किल ? पिता मरणोन्मुखः अस्ति । इतः रामपुरमेव गच्छाव'' इति विष्णुः लक्ष्मीम् उक्तवान् ।

''स तु वृद्धः । वार्धके अस्वस्थः चेत् तत्र न कोऽपि विशेषः । मृतः भवतु नाम सः ।

कमलेशः



अहं तु विवाहं गच्छाम्येव । तत्र आगतानां बन्धूनां दर्शनेन सन्तुष्टा सती सानन्दं कालं यापयिष्यामि । रुचिकरं भोजनं करिष्यामि । एतत् सर्वं त्यक्त्वा तत्र रोदनार्थम् आगन्तुं न इच्छामि'' इति अवदत् लक्ष्मीः ।

विष्णुः ताम् अनुनयन् - ''भवती गृहस्य स्नुषा अस्ति । मम वचनं शृणोतु । एवं निर्दयतया व्यवहारः न उचितः'' इति उक्तवान् ।

''निर्दया न अहम्, अपि तु भवान्, भवन्मातापितरौ च । भवता गन्तव्यमिति अस्ति चेत् गच्छतु'' इति लक्ष्मीः उक्तवती ।

एवं द्वयोः मध्ये उच्चस्वरेण कलहः आरब्धः । तौ परस्परं निन्दाप्रवाहे मज्जयन्तौ आस्ताम् । तदा काचित् पिशाची अकस्मात् प्रत्यक्षीभूय तौ उक्तवती - ''तूष्णीं तिष्ठताम् । अत्र किं जातम् ? किमर्थं कलहं कुर्वन्तौ स्तः भवन्तौ ?'' इति

पिशाचीं दृष्ट्वा उभावपि मूकौ अभवताम् । उभयोः अपि नेत्रेषु भीतिः स्पष्टं दृश्यते स्म ।

पिशाच्या पुनः पृष्टम् - ''कलहस्य कारणं किम् ? समस्या का ?'' इति ।

तदा लक्ष्मीः - ''अहम् एतस्य पत्नी अस्मि इत्यतः मया अनेन उक्तं सर्वं श्रोतव्यम्, उक्तं सर्वं करणीयं च इति नास्ति किल ?'' इति पतिं दर्शयन्ती उक्तवती पिशाचीम् ।

पिशाच्याः उत्तरदानात् पूर्वमेव विष्णुः अपि सावेशम् उक्तवान् - ''जगति पत्न्याः वचनस्य श्रोतारः उन्नतिं प्राप्नुवन्ति किम् ? पत्नीवचनपालकः किं पुरुषः इति वक्तुं शक्यः ?'' इति ।

पिशाची क्षणं मौनेन स्थित्वा उक्तवती - ''वदताम् । भवतोः कः बुद्धिमान् ?'' इति ।

अनेन वचनेन उभौ अपि आत्मानं बुद्धिमन्तं वदन्तौ पुनः परस्परं कलहम् आरब्धवन्तौ ।

''मौनेन स्थीयताम् । भवतोः मध्ये परीक्षां कृत्वा कः बुद्धिमान् इति अहमेव निर्णयं श्रावयिष्यामि । मम वचनम् उभाभ्यामपि अङ्गीकरणीयम् । किम् अनुमन्यते एतत् ?'' इति पृष्टवती सा पिशाची ।

उभौ अपि अङ्गीकारपूर्वकं शिरः चालितवन्तौ । पिशाची शीघ्रं वृक्षस्य उपरि गत्वा स्यूतद्वयम् आनीय तौ उक्तवती - ''प्रतिस्यूतं पञ्चाशत् सुवर्णनाणकानि सन्ति । उभयोः कृते अपि मया एकैकः स्यूतः दीयते । दिनत्रयानन्तरं पुनः एतस्य एव वृक्षस्य समीपं भवद्भ्याम् आगन्तव्यम् । यः अस्मिन् स्थितं धनम् इतोऽपि अधिकं कृत्वा आनेष्यति सः

एव बुद्धिमान् भवति'' इति ।

विष्णुः लक्ष्मीः च सम्भ्रमेण तौ स्यूतौ स्वीकृत्य उक्तवन्तौ - ''अस्तु, भवत्याः परीक्षा आवाभ्याम् अङ्गीकृता'' इति ।

पिशाची पुनः वृक्षं प्राप्तवती । लक्ष्मीः विवाहार्थं गता । विष्णु पितरं द्रष्टुं गतः ।

दिनत्रयानन्तरं विष्णुः लक्ष्मीः च तस्य वृक्षस्य समीपम् आगतौ । तावति काले यत् सञ्जातं सा कथा एवम् अस्ति - लक्ष्मीः पत्या सह अगत्वा विवाहार्थं गता । तत्र तस्याः सुवर्णनाणकस्यूतः चोरितः । तथैव पितरं द्रष्टुं गतस्य विष्णो स्यूतः अपि चोरितः जातः ।

उभयोः मनसि अपि एष एव विचारः यत् स्यूतं विना आगतौ आवां दृष्ट्वा पिशाची किं वदेत् इति । अतः उभौ अपि उपायमेकं चिन्तितवन्तौ । उपायानुसारम् उभौ महता प्रयत्नेन अहर्निशं कार्यं कुर्वन्तौ धनं सम्पाद्य स्यूतयोः तत् धनं संस्थाप्य पिशाचीं द्रष्टुम् आगतौ, पिशाचीं प्रवृत्तं सर्वं कथितवन्तौ च ।

तयोः निष्कपटभावनया सन्तुष्टा सा पिशाची उक्तवती - ''भवतोः सत्यवचनेन अहं सन्तुष्टा अस्मि । अपि च समस्यायाः सम्मुखीकरणे भवतोः चिन्तनम् आरब्धम् । चिन्तनानुगुणं निर्णयमेकं स्वीकृत्य तथैव कृतं च भवद्भ्याम् । तेन नष्टं धनं पुनः प्राप्तुं शक्तौ अभवताम् । किन्तु उभयोः अपि स्यूतौ कथं चोरितौ इति किं ज्ञायते ?'' इति ।

''न । चोरः कः इति यदि ज्ञायेत तर्हि ग्रामाधिकारिणम् उक्त्वा दण्डं कारयेयम्'' इति लक्ष्मीः कोपेन उक्तवती ।

तदा पिशाची उच्चैः हसन्ती - ''भवतोः निष्कपटता परस्परं प्रीतिश्च कथमस्ति इति परीक्षितुम् अहमेव एवं कृतवती । तिष्ठताम्'' इति उक्त्वा पुनः वृक्षस्य उपरि गत्वा द्वौ स्यूतौ पुनः आनीतवती । एकैकं तयोः हस्ते दत्त्वा - ''अस्मिन् मया दत्तानि सुवर्णनाणकानि सन्ति । इदानीं भवतोः समीपे धनस्य राशिरेव अस्ति । अनेन धनेन किमपि वाणिज्यं करिष्यन्तौ सुखेन जीवताम्'' इति अवदत् ।

इदानीं विष्णुं लक्ष्मीं च दृष्टवतां ग्रामीणानां सर्वेषामपि आश्चर्यमेव । यतः तौ परस्परं कलहं न कुरुतः । परस्परं प्रीत्या व्यवहारोऽपि दृश्यते तयोः । जनाः सर्वथा न जानन्ति एव यत् अस्य सर्वस्य मूलं सा पिशाची एव इति ।





# पुण्यं कर्म

पुरा धर्मपालनामकः वणिक् अक्षयपुर-निवासी आसीत् । तस्य वणिजः पत्नी सुलक्षणा इति । तयोः दम्पत्योः पञ्च पुत्राः आसन् । सः वणिक् वाणिज्यं कुर्वन् प्रभूतं धनं सम्पादितवान् । तौ दम्पती प्रतिदिनं तुलस्याः, अश्वत्थवृक्षस्य, आमलकवृक्षस्य च पूजां कुरुतः स्म ।

तयोः दम्पत्योः कश्चन विशिष्टः नियमः आसीत् । प्रतिदिनमपि तौ कस्मैचित् निर्धनाय जनाय एकं सुवर्णामलकं दत्त्वा एव भोजनं कुरुतः स्म ।

गच्छति काले ज्येष्ठस्य पुत्रस्य विवाहः अभवत् । पतिगृहम् आगता ज्येष्ठा स्नुषा श्वश्र्वा क्रियमाणं सुवर्णामलकस्य दानं न असहत ।

अतः श्वश्रूम् उक्तवती सा - ''अम्ब । प्रतिदिनम् एवं सुवर्णामलकदानं क्रियते चेत् गृहस्य परिस्थितिः शोचनीया भवेत् । अतः भवत्या रजतस्य आमलकं दीयते चेत् वरम्'' इति ।

तस्याः वचनं तौ वृद्धदम्पती अङ्गीकृत्य ततः आरभ्य रजतामलकस्य दानम् आरब्ध-वन्तौ ।

यदा द्वितीयपुत्रस्य विवाहः सम्पन्नः तदा द्वितीया स्नुषा रजतामलकस्य दानं न असहत । सा श्वश्रूम् उक्तवती - ''एतावत् रजतं दान-रूपेण गच्छति चेत् न ज्ञायते, अग्रे गृहस्य परिस्थितिः कीदृशी भवेत् इति । अतः ताम्रस्य आमलकस्य दानं क्रियते चेत् उचितं भवेत्'' इति ।

इदानीं तौ दम्पती स्ववार्धक्यानुगुणं मनसि स्थितां भावनां दूरीकुर्वन्तौ तस्याः स्नुषायाः कथनानुसारं ताम्रामलकस्य दानम् आरब्ध-वन्तौ ।

एवमेव तृतीयस्य पुत्रस्य अपि विवाहः जातः । तस्य पत्नी अपि पतिगृहम् आगता ।

सा ताम्रामलकस्यापि दानं न असहत ।

सापि स्वश्वश्रूम् उक्तवती– ''अम्ब ! गृहस्य परिस्थितिं पश्यामः चेत् भासते यत् दानरूपेण अधिकमूल्ययुक्तस्य ताम्रस्य दानं न उचितम् इति । अतः इतः परं लोहस्य आमलकस्य दानं क्रियते चेत् समीचीनं भवेत्'' इति ।

तौ वणिग्दम्पती अनेन असन्तुष्टौ । तथापि विना वचनं अयसः आमलकस्य दानमेव आरब्धवन्तौ ।

किन्तु एतावता तस्य गृहस्य परिस्थितिः असमीचीना जाता आसीत् । सर्वेषु पुत्रेषु महत् आलस्यं प्रवृद्धम् आसीत् । काऽपि स्नुषा कार्यं कर्तुं न इच्छति स्म । गच्छता कालेन तस्मिन् गृहे महतः दारिद्र्यस्य सर्वाणि लक्षणानि आगतानि एव ।

चतुर्थस्य पुत्रस्यापि विवाहः जातः । चतुर्थी स्नुषाऽपि गृहम् आगता । सा श्वश्रूम् उक्तवती – ''अम्ब ! भवद्भ्यां यत् अयसः दानं क्रियमाणम् अस्ति तेनैव यदि वाणिज्यम् आरभ्येत तर्हि गृहपरिस्थितिः किञ्चित् उत्तमा भवेत् । दानं कृत्वा परलोके सुखम् इच्छन्तौ भवन्तौ अस्मिन् लोके जीवतां पुत्रपौत्राणां स्थितिं कष्टमयीं कुरुतः । दानं करणीयमेव इति मनसि अस्ति चेत् पिष्टस्य आमलकं कृत्वा दीयताम्'' इति ।

तस्याः स्नुषायाः वचनं तौ वृद्धदम्पती अङ्गीकृतवन्तौ । किन्तु यदा पञ्चमस्य पुत्रस्य पत्नी आगत्य पिष्टामलकदानमपि स्थगितवती तदा नितरां दुःखितौ तौ दम्पती तीर्थक्षेत्रदर्शनव्याजेन गृहात् प्रस्थितौ ।

एतावति काले पञ्चसु अपि पुत्रेषु आलस्यं प्रवृद्धम् आसीत् । ते उद्योगं तु न कुर्वन्ति स्म । विद्याभ्यासः अपि तैः पूर्वं न कृतः



आसीत् । विना कार्यं गृहे उपविश्य भोजनादिकं कृतवतां तेषां कार्ये मनः न प्रवृत्तमेव । श्रमं विना यः अन्नं भुङ्क्ते तं चोरं वदन्ति ज्येष्ठाः । अतः संस्काररहितानां तेषां प्रवृत्तिः गृहे दारिद्र्यस्य दुराचारस्य च कारणं जाता ।

गृहतः प्रस्थितौ तौ वृद्धदम्पती सरयूनद्याः तटे स्थिते एकस्मिन् वने वसन्तौ, आमलकैः आयुर्वेदीयौषधं निर्माय तस्य विक्रयणेन जीवने पुनः तृप्तिं सम्पादितवन्तौ ।

श्रमेण कृतेन कर्मणा ताभ्याम् अविलम्बेन फलं प्राप्तम् । तौ एकं विशालं मन्दिरं भवनं च निर्मापयितुम् उद्युक्तौ ।

नगरे स्थितानां तयोः पुत्राणां स्नुषाणां च परिस्थितिः अतीव शोचनीया संवृत्ता । दरिद्राः ते इदानीं महता श्रमेण कार्यं कुर्वन्तः उदरं पूरयितुं प्रयतन्ते स्म । यदा सरयूनद्याः तटे प्रियाङ्कानामिकायां नगर्यां विशालं मन्दिरं निर्मीयमाणम् आसीत् तदा कर्मकरत्वेन तत्र कार्यं कर्तुम् एते पञ्च पुत्राः अपि पत्नीभिः सह आगताः ।

एकस्मिन् दिने सुलक्षणायाः सेविकाः रजतमयम् आमलकं कनिष्ठस्नुषायै दानरूपेण दत्तवत्यः ।

तत् आमलकं हस्ते संस्थाप्य रुदती सा उक्तवती - ''मम श्वश्रूः अपि एवमेव दानं करोति स्म । अस्माकं सर्वेषां दुष्कर्मणः कारणतः मम श्वश्रूश्वशुरौ अस्मान् परित्यज्य गतौ । इदानीं तौ कुत्र स्तः इति न ज्ञायते'' इति ।

एतत् वचनं ताः सेविकाः सुलक्षणाम् उक्तवत्यः । सुलक्षणया सर्वं ज्ञातम् अभवत् । सा ताः पञ्च स्त्रीः, तासां पतीन् च स्वभवनम् आनायितवती । पुत्राणां केशकर्तनादिकं सर्वं कारयित्वा वस्त्रादिभिः अलङ्कारितवती । स्नुषाः अपि आहूय तासां केशप्रसाधनादिकं कारयित्वा उत्तमैः वस्त्राभरणैः अलङ्कारं कारितवती ।

ततः तौ वृद्धदम्पती स्वपरिवारेण सह मिलितवन्तौ । एतदनन्तरं सर्वैरपि 'शुभानि कर्माणि सर्वदा उत्तमफलं ददति' इति ज्ञातम् । तदारभ्य सर्वे अवगुणान् संत्यज्य योग्येन क्रमेण त्यागादिकं कुर्वन्तः सुखेन जीवनं कृतवन्तः ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

चित्रं – महेशः

चन्द्रपुरीतः निर्गतयोः रवीन्द्रदेव-नरेन्द्रदेवयोः अन्वेषणाय आदित्यः सर्पदिशं गच्छति । आदिवासियुवदम्पत्योः मुखात् तयोः सम्बन्धिनः विषयाः ज्ञायन्ते । तान्त्रिकस्य नागबन्धोः मार्गदर्शनस्य अनुगुणं नरेन्द्रदेवः आदित्यस्य ग्रहणाय राजधानीं प्रति प्रस्थितः । किन्तु नद्यां जातात् आक्रमणात् तस्य पादौ नष्टौ । आदित्यः तान्त्रिकस्य सम्मुखीकरणाय उद्युक्तः ।

आदित्यः तदीयाः अङ्गरक्षकाः च शिबिरम् आक्रम्य रवीन्द्रदेवस्य जनान् बध्नन्ति । रवीन्द्रदेवीयाः विना विरोधम् अधीनाः भवन्ति ।

भवतां स्वामी कुत्र ? रवीन्द्रदेवः कुत्र निलीय तिष्ठति ?

महानुभाव ! सः, तदाप्तपुरुषाः च तान्त्रिकस्य अतिथिरूपेण वसन्ति । गुहायाः अन्तः कस्मिंश्चित् प्रकोष्ठे तेषां वासः ।

आदिवासिनः सैनिकानां बन्धनं ज्ञात्वा नितरां प्रसन्नाः सन्तः डिण्डिमं वादयन्ति ।

इतोऽपि उच्चैः वाद्यताम् । तान्त्रिकः एतं शब्दं यदि शृणुयात् तर्हि गुहातः बहिः आगच्छेत् ।

शिष्यगणः आदिवासिनः बोधयति ।

इदानीं डिण्डिमस्य शब्दः कथम् ?

किमर्थं डिण्डिमः वाद्यमानः अस्ति ?

गुहायाः प्रवेशद्वारे शिष्याः उपस्थिताः भवन्ति ।

रे, शब्दः मा क्रियताम् । प्रातःकाले शान्ति-भङ्गं न इच्छति अस्माकं स्वामी ।







शिष्याः आकस्मिकात् आक्रमणात् भीताः भवन्ति । आदित्यस्य जनाः तेषां मुखं पिधाय बहिः नयन्ति । गमनात् पूर्वं .........

यथादेशः तथा क्रियताम् ।

अस्तु महानुभाव !

किं कुर्वन्ति भवन्तः ? अस्मान् कुत्र नयन्तः सन्ति ?

....शिष्याः हस्तस्थानि पात्रादीनि भूमौ पातयन्ति । एतं शब्दं श्रुत्वा तान्त्रिकः सावधानः भवेत् इति तेषाम् आशयः ।

पात्राणां झणझणत्कारं श्रुत्वा नागबन्धुः जागरितः भवति ।

एषः कोलाहलः किमर्थम् ? किं कोऽपि नास्ति अत्र ?

कस्यापि उत्तरम् अप्राप्य तान्त्रिकः स्वस्य प्रकोष्ठात् बहिः आगच्छति ।

किं प्रवर्तते अत्र ? सर्वे कुत्र वा गताः स्युः ?

बहिः आगतः तान्त्रिकः डिण्डिम-वाद्यध्वनिं शृणोति ।

अहा ! ते आदित्यं गृहीतवन्तः स्युः । अद्य सुदिनं मम । षष्टितमीं बलिं दातुं मया सज्जेन भवितव्यम् ।

अनुवर्तति




## 'मित्रस्य' साहाय्यम्

मर्कटः मनीशः गजस्य उपरि उपविश्य महान्तम् आनन्दम् अनुभवन् अस्ति । 'मित्र'नामकः मर्कटः तेन सह प्रयाणं कर्तुम् इच्छति । अवरोधनिवारणपूर्वकं गजस्य आरोहणे किं भवन्तः मित्रस्य साहाय्यं कर्तुम् अर्हन्ति ?

## प्रमादः अन्विष्यताम्

हा हन्त, हन्त ! एतस्मिन् दृश्ये नास्ति सर्वम् अपि सुसङ्गतम् । दृश्येऽस्मिन् कः दोषः इति किं भवन्तः अभिज्ञातुं शक्नुयुः ?

## अभिजानन्तु पशून्

विलक्षणः अस्ति अत्रत्यः वृक्षः । अहो आश्चर्यम् ! अरण्यस्थाः बहवः पशवः एतस्मिन् वृक्षे निलीय स्थिताः इव सन्ति । किं तान् अभिज्ञातुं शक्नुयुः भवन्तः ?

## अन्येभ्यः भिन्नः कः ?

चिक्चिक्कथकः चिक्रोडः तद्बान्धवाः च परस्परानुकरणे सुनिपुणाः । किन्तु कदाचित् ते असफलाः भवन्ति तत्र । पार्श्वस्थान् चिक्रोडान् सुसूक्ष्मं परिशील्य तम् अभिजानन्तु, यश्च अन्येभ्यः भिन्नः अस्ति ।

## चित्राणां वर्णलेपनं कुर्वन्तु

चित्रेऽस्मिन् कुक्कुटरायः रविः आनन्देन वाद्यं वादयन् अस्ति । चित्रकारः चित्रस्यास्य वर्णलेपनं विस्मृतवान् अस्ति । किं भवन्तः कुक्कुटरायं वर्णैः विभूषयितुम् अर्हेयुः ?

(उत्तराणि ६६तमे पृष्ठे)




MAHE...




# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'मे'मासस्य चित्रशीर्षिकाप्रेषिका -**
**सौ. मीरा रामनाथ**
*द्वारा - राजाजी विद्याश्रमः, किल्पाक्-उद्यानमार्गः, किल्पाक्, चेन्नै - ६०० ०१०*

**पुरस्कृतशीर्षिका**





**आत्मपैरुपे दृढा भक्तिः**
**भाग्योद्घोषणे वृथा शक्तिः**

**मनोविनोदस्य उत्तराणि - (पु. ६४,६५)**

**अभिजानन्तु पशून्** - वृक्षे १४ पशवः निलीनाः सन्ति । ते च -
मूषकः, चित्रपतङ्गः, गृहगोधिका, चिक्रोडः, हरिणः, गृध्रः, मार्जारः, श्रृगालः, यूका, मीनः, कारण्डवः, शशः, उलूकः, कूर्मः च ।

**'डि'चिक्रोडः अन्येभ्यः भिन्नः ।**

**प्रमादः अन्विष्यताम्** - सर्पस्य पुच्छे अपि फणा(शिरः) दृश्यते ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

CHANDAMAMA (Sanskrit) MAY 2003
Regd. with Registrar of Newspaper for India No. 42664/85
Registered No. TN/PMG(CCR)-589/03-05
Licensed to post without prepayment No. 371/03-05
Foreign - WPP No. 37203-05